# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अक्षतः - | Unscathed | धारा - | Edge of knife |
| अतिलालनम् - | Excessive fondness | धीवरः - | Fisherman |
| अनुज्ञा - | Permission | निखन्य - | Having planted |
| अनुवर्तितवान् - | Continued | निश्रेणी - | Ladder |
| अपव्ययः - | Needless expenditure | पाचकः - | Male cook |
| अव्यावहारिकम् - | Impracticable | पुलिनम् - | Sand |
| उद्घर्षणम् - | Sharpening | प्रतिकृतिः - | Copy |
| उत्पीठिका - | Table | भागिनेयी - | Sister's daughter |
| उपनाम - | Surname | मातुलः - | Maternal-uncle |
| कवाटः - | Door | मुण्डम् - | Head |
| किञ्चुलकः - | Earthworm | मृच्छदः - | Tile |
| कुल्या - | Canal | मोहयति - | Captivates |
| कूर्चः - | Painter's brush | विक्रीणीते - | Sells |
| गोधूमः - | Wheat | वेत्रदण्डः - | Cane or stick |
| घातकः - | Assailant | शाकः - | Vegetables |
| चणकः - | Bengalgram | शाटिका - | Sari |
| छदिः - | Roof | सकृत् - | Once |
| तोलयति - | Compares | सकृद्ग्राही - | Quick in receptivity |
| त्वक् - | Husk | सम्मार्जनी - | Broom |
| त्वरते - | Eager | सविस्तरम् - | In detail |
| द्वेष्टि - | Hates | हसन्ती - | Stove |
| धटः - | Pan of a balance | हस्तिपकः - | Mahout |

जिज्ञासा –

# प्रत्यये ककारलोपः, णिजन्तात् णिच् च

शिष्यः- श्रीमन्! ज्ञात्वा त्यक्त्वा इत्यादिषु कः प्रत्ययः?

आचार्यः- क्त्वाप्रत्ययः। एषः तु प्राथमिकः अंशः। भवता पूर्वम् एव ज्ञातः स्यात् अपि।

शि - किन्तु 'ज्ञात्वा' इत्यादिषु रूपेषु तु 'त्वा' केवलं श्रूयते, न तु क्त्वा?

आ - आम्। प्रत्ययादौ स्थितस्य ककारस्य लोपः भवति। क्त, क्तवतु इत्यादिषु अपि एवम् एव।

शि - किमर्थं तथा लोपः करणीयः?

आ - पाणिनेः व्यवस्था तथा अस्ति। प्रत्ययेषु के के वर्णाः लुप्ताः भवन्ति इति तेन निर्दिष्टम् अस्ति।

शि - सिद्धे रूपे यस्य वर्णस्य दर्शनं न भवति तादृशस्य वर्णस्य प्रत्यये योजनेन किं प्रयोजनम्?

आ - एकैकस्य वर्णस्य लोपेन एकैकं प्रयोजनं भवितुम् अर्हति।

शि - 'क्त्वा' इत्यत्र ककारलोपेन किं प्रयोजनम्?

आ - भवान् गुणं वृद्धिं च जानाति खलु?

शि - आम्। ह्रस्वः अकारः, एकारः, ओकारश्च गुणः इति उच्यते[1]। आकारः, (दीर्घः अकारः) ऐ, औ च वृद्धिः इति उच्यते[2]।

आ - ककारलोपयुक्तः प्रत्ययः यस्य परे भवति तस्य धातोः गुणः वृद्धिः वा न भवति[3]। यथा नीत्वा, मिलित्वा, क्रीत्वा इत्यादयः।

शि - एवं तर्हि ककारलोपरहितः प्रत्ययः यदा परे भवति तदा गुणः वृद्धिः वा भवति खलु?

आ - आम्। तुमुन्प्रत्यये परे तादृशः विकारः दृश्यते। यतः तत्र ककारलोपः कोऽपि नास्ति। एतानि रूपाणि पश्यतु तावत्–

नीत्वा – नेतुम् मिलित्वा – मेलितुम्

---

[1] अदेङ्गुणः। [2] वृद्धिरादैच्। [3] क्क्ङिति च।

लिखित्वा – लेखितुम्

भूत्वा – भवितुम् क्रीत्वा – क्रेतुम्

शि - नीत्वा, मिलित्वा इत्यादिषु गुणविकारः न दृश्यते। नेतुम्, मेलितुम् इत्यादिषु स च विकारः दृश्यते।

आ - एवम् एव क्त, क्तवत् इत्यादिषु परेषु अपि धातौ विकारः न दृश्यते। यथा–

नीतः / नीतवान्

मिलितः / मिलितवान्

लिखितः / लिखितवान्

शि - तर्हि **मेलयित्वा** , लेखयित्वा इत्यादिषु यः गुणः (इकारस्य एकारः) दृश्यते सः किन्निमित्तकः?

आ - 'मिलित्वा' इत्येतस्य रूपस्य धातुः मिल्। 'मेलयित्वा' इत्यत्र तु धातोः अनन्तरं क्त्वाप्रत्ययात् पूर्वं प्रेरणार्थकः 'णिच्' योजितः। णिच्प्रत्ययकारणतः गुणः दृश्यते, न तु क्त्वाप्रत्ययकारणतः। 'लेखयित्वा' इत्यादिषु अपि एवम् एव।

शि - श्रीमन्! प्रसङ्गवशात् स्मृतं पृच्छामि–

रामः करोति। कृष्णः रामं करणे प्रेरयति – तन्नाम कृष्णः कारयति। एवं करोति इत्यस्य प्रेरणार्थकं रूपं कारयति इति। गोविन्दः कृष्णद्वारा रामं प्रेरयति चेत् क्रियापदरूपं किं भवति?

आ - णिजन्तात् णिच् कृतें चेत् किं रूपम् इति खलु भवतः प्रश्नः? तदा अपि कारयति इत्येव रूपम्।

शि - करोतेः प्रेरणार्थकं णिजन्तं रूपं कारयति इति। कारयतेः प्रेरणार्थकं णिजन्तं रूपम् अपि कारयति इत्येव?

आ - आम्। कारयति इति णिर्जन्तं रूपम्। तदूर्ध्वं यावत् वा णिच् योजयतु, रूपं तु कारयति इत्येव।

शि - तदा अर्थनिर्णयः कथम्?

आ - सन्दर्भानुसारम् अर्थनिर्णयः क्रियते। यथा–

* कृष्णः रामेण कारयति – अत्र रामः कर्ता, कृष्णः च प्रेरकः।
* गोविन्दः कृष्णेन रामेण कारयति – अत्र रामः कर्ता, कृष्णः गोविन्दश्च प्रेरकौ।



# चन्दमामा

मार्च्-१९८९

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००
वार्षिकं ग्राहकशुल्कं रू. ३६-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

संस्कृतचन्दमामा इतःपरं षष्ठे वर्षे पदं स्थापयिष्यति। पञ्चमवर्षस्य अन्तिमसञ्चिका एषा। पञ्चसु वर्षेषु चन्दमामया किं साधितम्? कियत् साधितम्? बहु? अल्पम्? अथवा न किञ्चिदपि? एतत् किमपि न जानीमः वयम्। एतावत् तु वदामः यत् – संस्कृते सचित्रमासपत्रिका कल्पनासाध्या एव इति या भावना आसीत् तां भावनां दूरीकुर्वती एषा प्रकाश्यमाना अस्ति इति।

वस्तुतः साफल्यविषये प्रमाणं न प्रकाशकः, न वा सम्पादकसमितिः। ग्राहकाः अत्र प्रमाणम्। केचन महान्तं सन्तोषं प्रकटितवन्तः। पुनः केचन परिष्कारांशान् सूचयन्तः उपकृतवन्तः। किन्तु एतादृशानां सङ्ख्या गणनासाध्या आसीत्। 'किम् एतेन अभिप्रायप्रकाशनेन?' इति विचिन्त्य बहवः तूष्णीम्भावम् आश्रितवन्तः स्युः प्रायः।

सन्तोषः, सूचनाः इत्यादयः निस्सङ्कोचं प्रकाशनीयाः। सन्तोषप्रकटनेन कार्यकर्तॄणाम् उत्साहः वर्धते। सूचनादानेन च ते कार्यमार्गं परिष्कर्तुम् अर्हन्ति।

उपाहारमन्दिरे कदाचित् लिख्यते– 'अत्र गुणाः दृष्टाः चेत् तान् समग्रे जगति प्रसारयन्तु। दोषाः दृष्टाः चेत् कृपया अस्मान् वदन्तु' इति। भवन्तः अपि एवम् एव कर्तुम् अर्हन्ति।

सम्पुटः–५ मार्च्--१९८९ सञ्चिका–१२

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००



रसप्रश्नाः—

# सीतावृत्तान्तकथनम्

(सीतां दृष्ट्वा प्रत्यागतः हनूमान् वानरैः सह सुग्रीवसमीपं प्रस्थितवान्। मार्गमध्ये तैः वानरैः मधुवनं नाशितम्। हनूमान् रामं दृष्ट्वा सीतावृत्तान्तं विस्तरेण निवेदितवान्। वाल्मीकिरामायणस्य एतं कथाभागम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. सीतान्वेषणे सफलतां प्राप्य प्रत्यागच्छद्भिः हनूमदादिभिः रामलक्ष्मणादयः कुत्र दृष्टाः?

II. रामं दृष्ट्वा हनूमान् सर्वप्रथमं किम् उक्तवान्?

III. 'रामाय ददातु' इति उक्त्वा अभिज्ञानरूपेण चूडामणिं हनूमते दत्तवती सीता। तत्समये स च मणिः तया कुत्र धृतः आसीत्?

(अ) स च मणिः पूर्वं केन तस्यै दत्तः?

(आ) कदा च दत्तः?

(इ) तेन दात्रा स च मणिः कथं प्राप्तः आसीत्?

IV. 'मम पृष्ठम् आरोहतु, नयामि भवतीम्' इति उक्तवन्तं हनूमन्तं सीता किम् उक्तवती?

V. प्रियवार्तां निवेदितवते हनूमते कीदृशम् उपायनं दत्तवान् रामः?

उत्तराणि—

I. प्रस्रवणनामके पर्वते।

II. 'सीता नियमपरा कुशलिनी च अस्ति' इति।

III. न धृतः आसीत्, अपि तु वस्त्राञ्चले बद्धः आसीत्।

(अ) तस्याः पित्रा जनकराजेन।

(आ) विवाहसमये।

(इ) यज्ञे परमसन्तुष्टेन इन्द्रेण दत्तः आसीत्।

IV. 'स्वबुद्ध्या परपुरुषस्य भवतः पृष्ठस्य स्पर्शनम् अधर्माय' इति।

V. आलिङ्गनसुखरूपम् उपायनम्।

# रसवार्ताः



## आयुष्यवर्धिनी निद्रा!

सैबीरियादेशस्य सुवर्णखनीषु कार्यं कुर्वन्तः केचन कर्मकराः घनीभूते जले स्थितं ९० वर्षेभ्यः पूर्वम् एव निद्रावस्थां प्राप्तवन्तं 'लिमोबिडे' नामकं प्राणिनं दृष्टवन्तः। तदीयपित्थकोषस्य भारः यावत् भवति ततोऽपि त्रिगुणितः भारः भवति तस्य। एतज्जातीयस्य प्राणिनः सामान्यम् आयुः १० वर्षाणि केवलम्। सुदीर्घनिद्रायाः कारणतः तस्य आयुः वर्धितम् आसीत्। सामान्योष्णतायुते जले यदा स्थापितं तदा सः निद्रातः जागरणं प्राप्नोत्।

## टालस्टाय्कण्ठस्वरः

१९०८ तमे वर्षे विज्ञानिना थामस् आल्वा एडिसन्महोदयेन ध्वनिमुद्रितः लियो टालस्टाय्वर्यस्य कण्ठस्वरः एषु दिनेषु प्राप्तः अस्ति। ध्वनिकोषः रशियादेशं प्रति नीतः अस्ति अपि। यस्मिन् कार्यालये ध्वनिमुद्रणं कृतं तस्य कार्यालयस्य व्यवस्थापकस्य वाल्टर् मिल्लर्नामकस्य गृहे स च ध्वनिकोषः प्राप्तः। अमेरिका देशस्थे एडिसन्सेण्टर्नामके कार्यालये १९१४ तमे वर्षे प्रवृत्ते अग्निदाहे एषः ध्वनिकोषः नष्टः इति एतावत्पर्यन्तं भावितम् आसीत्।





## स्वानुभवार्थं गजारोहणम्

इंग्लेण्ड्देशीयः मार्क् षाण्ड्नामकः कार्यकर्ता कोणार्कस्य सूर्यदेवालयतः बिहार्राज्यस्य सोनेपूरपर्यन्तं सामान्यतः १००० कि.मी. यावत् गजम् आरुह्य प्रयाणं कृतवान्। गजस्य मानवस्य च यः सम्बन्धः भवति तं सम्बन्धं, हस्तिपकेन क्रियमाणं गजस्य वशीकरणं च स्वानुभवेन ज्ञातुं सः एतत् प्रयाणं कृतवान्।

## न तावत् प्राचीनं तत्

इटलिदेशस्य टुरीन्क्रिस्तमन्दिरे एसुक्रिस्तस्य शूलारोपणानन्तरं तस्य कलेवरस्य उपरि स्थापितम् इति भाव्यमाने वस्त्रे द्वित्राणि रक्तचिह्नानि दृश्यन्ते। तदाधारेण त्रयाणां विश्वविद्यालयानां संयुक्ताश्रये प्रवृत्तात् संशोधनात् ज्ञायते यत् तच्च वस्त्रं न तावत् प्राचीनम्, अपि तु चतुर्दशशतकसम्बन्धि तत् इति।



# धर्मबोधनम्

धर्मपुरे धर्मनन्दनः नाम पण्डितः निवसति स्म। तस्य पत्नी पार्वती अतीव कृपणा। धनव्ययं विना पुण्यं सम्पादनीयम् इति तस्याः विचारः।

एकदा सम्मार्जनविक्रयिका वृद्धा तस्याः गृहस्य पुरतः गच्छन्ती आसीत्। पार्वती ताम् आहूय प्राचीनाम् एकां शाटिकां तस्याः पुरतः स्थापयित्वा पृष्टवती– "एतां स्वीकृत्य कति सम्मार्जनीः दातुम् अर्हति भवती?" इति।

"द्वयं दातुं शक्नोमि" इति उक्तवती सा विक्रयिका।

"किं भोः, केवलं सम्मार्जनीद्वयम् एव वा? एतदपेक्षया एतां शाटिकां कस्यैचित् निर्धनायै दानरूपेण दत्तं चेत् पुण्यं वा लभ्येत" इति उक्त्वा शाटिकां तत्रैव पार्श्वे स्थापयित्वा पृष्टवती पार्वती– "रूप्यकस्य कति सम्मार्जनीः ददाति? तत् वा वदतु तावत्" इति।

"चत्वारि" इति उक्तवती सा विक्रयिका वृद्धा। पार्वती एकं रूप्यकं दत्त्वा चतस्रः सम्मार्जनीः क्रीतवती।

विक्रयिका वृद्धा ततः गमनसमये पार्वत्या पार्श्वे स्थापितां शाटिकाम् अपि स्वीकृत्य गन्तुम् उद्युक्ता।

एतत् दृष्ट्वा पार्वती कोपेन– "सम्मार्जनीनां निमित्तं धनं दत्तं खलु मया? पुनः शाटिकां किमर्थं स्वीकृतवती? किं चोरयति वा?" इति।

तदा सा वृद्धा हसन्ती– "अम्ब! कस्यैचित् निर्धनायै दातुं खलु शाटिका पार्श्वे स्थापिता? अहं निर्धना तां स्वीकृतवती। तेन भवत्या दानफलं पुण्यं प्राप्तम्। धनं दत्त्वा सम्मार्जनीः अपि प्राप्तवती भवती" इति उक्त्वा ततः निर्गतवती।

पार्वती आश्चर्येण तां पश्यन्ती स्थितवती। तदा तस्याः पतिः हसन् पार्वतीम् उक्तवान्– "भोः, बलात् भवत्या दानं कारयन्त्या तया युक्तं धर्मबोधनं कृतम्" इति।





# पराजयफलम्

जयपुरे महेशः नाम कश्चन कृषिकयुवकः आसीत्। सः जन्मतः अतीव बुद्धिमान्, विनोदप्रियश्च। सर्वान् सदा हासयन् तिष्ठति सः। तस्य रूपं, बुद्धिमत्तां, स्वभावं च दृष्ट्वा बहवः तस्मै कन्यां दातुम् उत्साहेन अग्रे आगतवन्तः। किन्तु तैः प्रस्तुतेषु कामपि कन्यां परिणेतुं सः सिद्धः न जातः।

विवाहविषये पौत्रस्य व्यवहारः पितामहाय रामचन्द्राय सर्वथा न अरोचत। सः एकदा पौत्रं महेशम् उक्तवान्– "वत्स! यां कामपि कन्यां न अङ्गीकरोति खलु भवान्! एवं चेत् भवतः विवाहः कदा भवेत्? भवतः माता साहाय्यिकां कदा वा पश्येत्? भवतः मनसि किम् अस्ति इति स्पष्टं वदतु" इति।

पितामहस्य वचनं श्रुत्वा हसन् महेशः उक्तवान्– "मातुः साहाय्यिका अपेक्षिता इत्यतः मां विवाहार्थं सूचयन् अस्ति वा भवान्? एतत् वचनम् इतः पूर्वम् एव उक्तं चेत् कार्यदक्षां दृढकायां काञ्चित् परिणीय आनीय गृहे स्थापयेयम्" इति।

पौत्रस्य विनोदवचनं श्रुत्वा स्वयम् अपि हसन् उक्तवान् रामचन्द्रः– "एषः विनोदस्य विषयः न वत्स! यां यां पश्यति तां निराकरोति चेत् अन्ते काचित् कुरूपिणी, चण्डी, दुर्बला वा परिणेतव्या भवेत्। जानातु एतत्" इति।

तदा महेशस्य पितामही– "वत्स! महेश! योग्ये वयसि विवाहः शोभते। सर्वासु अपि कन्यासु भवान् अवगुणं पश्यति खलु? दोषरहितः कोऽपि अस्ति वा लोके? यत्र गुणाधिक्यं दृश्यते तादृशी परिणेतव्या" इति उक्त्वा पत्युः वचनं समर्थितवती।

महेशः हसन् पितामहीम् उक्तवान्– "भवत्याः वचनं सत्यम् एव। किन्तु या परिणीयते तया सह आजीवनं खलु



स्थातव्यम्? अतः अहं कन्यायां बुद्धिमत्तां, सदोत्साहं, क्रियाशीलतां च पश्यामि। तादृशी काचित् दृष्टा चेत् अद्यैव अहं परिणयार्थं सिद्धः" इति।

रामचन्द्रस्य मित्रं गुरुदत्तः पार्श्वग्रामे निवसति। सः अपि रामचन्द्रः इव वार्धके अस्ति। कदाचित् सः रामचन्द्रं द्रष्टुं तदीयं गृहम् आगतवान्। उभौ अपि एकत्र उपविश्य गतजीवनस्य घटनाः स्मरन्तौ अनौपचारिकं वार्तालापम् आरब्धवन्तौ।

तत्समये महेशः मन्दस्वरेण गीतं गायन् गृहे उत्साहेन इतस्ततः सञ्चरन् आसीत्। तं दृष्ट्वा गुरुदत्तः रामचन्द्रम् उक्तवान्– "एषः भवतः पौत्रः महेशः एव खलु? यदा सः बालकः आसीत् तदा मया दृष्टः। इदानीं तु उत्साही तरुणः सञ्जातः। कन्या कापि दृष्टा वा? कदा विवाहः?" इति।

"कन्यान्वेषणं मम कार्यम्। दृष्टानां सर्वासां निराकरणं तस्य कार्यम्। एंवं प्रचलति विवाहप्रयत्नः" इति सनिःश्वासम् उक्त्वा महेशस्य व्यवहारं सविस्तरं निवेदितवान् रामचन्द्रः।

"एवं वा! तर्हि एषः मम पौत्र्याः श्रीगौर्याः निमित्तं योग्यः वरः।" इति उक्तवान् गुरुदत्तः।

"भवतः पौत्री किं तावद्बुद्धिमती?" इति कुतूहलेन पृष्टवान् रामचन्द्रः।

"अथ किम्? भोः, सा गुरुदत्तस्य मम पौत्री इति स्मरतु। सा बुद्धिमत्तया भवतः पौत्रं निश्चयेन अतिशेते" इति साभिमानम् उक्तवान् गुरुदत्तः।

स्वपौत्रस्य विषये गुरुदत्तेन लघुता प्रदर्श्यमाना अस्ति इति भावयन् रामचन्द्रः उक्तवान्– "एवं तर्हि मम पौत्रः महेशः तां पश्येत्। तस्याः बुद्धिमत्तायाः परीक्षा भवतु नाम" इति।

अनन्तरं तौ – 'महेशः श्रीगौरीं दृष्ट्वा परीक्ष्य अङ्गीकरोति चेत् विवाहः प्रचलतु' इति निश्चित्य महेशम् आहूय सर्वं निवेदितवन्तौ। पितामहस्य तृप्त्यर्थं महेशः गुरुदत्तेन सह प्रस्थितवान्।

गुरुदत्तः स्वगृहं प्राप्य अङ्गणे एव स्थित्वा उच्चस्वरेण गृहसदस्यान् आहूय एकैकशः

गृहसदस्यानां परिचयं कारितवान्। पौत्र्याः परिचयम् अपि कारयित्वा ताम् उद्दिश्य उक्तवान्– "श्रीगौरि! मम पौत्रः महाबुद्धिमान् इति रामचन्द्रः गर्वेण वदति। 'मम पौत्री ,अपि बुद्धिमती एव। सा भवतः पौत्रम् अपि अतिशेते' इति तम् अहम् उक्तवान्। 'प्रत्यक्षं पश्यतु' इति उक्त्वा एतम् आकृष्य आनीतवान् च" इति।

स्वश्लाघनपरं पितामहस्य वचनं श्रुतवत्याः श्रीगौर्याः मुखम् आरक्तं जातम्।

महेशः श्रीगौरीं मन्दहासपूर्वकम् उक्तवान्– "अहं न पशुः, येन अयं माम् आकृष्य आनयेत्। मम पितामहस्य वचनम् अनुसृत्य अहम् एव स्वयम् आगतः। अस्तु तावत्। प्रयाणात् श्रान्तः अहं पानीयम् इच्छामि। यत् कूपात् न आगतं, यत् न उद्घृतं, यच्च मानवहस्तलभ्यं न, तादृशं मधुरजलम् अस्ति चेत् ददातु" इति।

गौरी मन्दहासं प्रकटयन्ती पृष्टवती– "तत् पानीयं सिद्धम् एव अस्ति। भवान् तत् दैवनिर्मितेन पात्रेण पिबति, उत मानवनिर्मितेन पात्रेण?" इति।

"दैवनिर्मितेन पात्रेण पानं क्लेशाय। मानवनिर्मितेन पात्रेण एव आनयतु" इति उक्तवान् महेशः। आत्मना पृष्टस्य प्रश्नस्य युक्तम् उत्तरं दत्तवतीं श्रीगौरीं मनसि श्लाघितवान् अपि।

निमेषद्वयाभ्यन्तरे श्रीगौरी चषकेण नारिकेलजलम् आनीतवती।

"पश्यतु मम पौत्र्याः बुद्धिमत्ताम्" इति





वदन् पौत्रीं साभिमानं दृष्टवान् गुरुदत्तः।

"अर्धमृतस्य निमित्तं स्वप्राणान् अर्पितवता के सुखेन जीवन्ति इति पौत्रीं पृच्छतु तावत्" इति नारिकेलजलं पिबन् गुरुदत्तम् उक्तवान् महेशः।

तदा श्रीगौरी हसन्ती– "भवदुक्तक्रमेण ये सुखेन जीवन्ति तादृशा. भवतः गृहं सप्ताहे कतिवारम् आगच्छन्ति इति प्रथमं वक्तुं सूचयतु तात! तदनन्तरम् अहं तस्य प्रश्नस्य उत्तरं वदामि" इति उक्तवती।

महेशः निराकारपूर्वकं शिरः चालयन् उक्तवान्– "शान्तं पापम्! तादृशाः मम गृहं कदापि न आगच्छन्ति" इति।

"अर्धमृतः भवति किञ्चुलकः। तदर्थं प्राणान् अर्पयति मीनः। मीनान् विक्रीय सुखेन तिष्ठन्ति धीवराः। युक्तं खलु मम उत्तरम्?" इति महेशं पृष्टवती श्रीगौरी।

गुरुदत्तः पौत्रीं साभिमानं पश्यन् महेशं पृष्टवान्– "एतावता भवतः परीक्षणं समाप्तं वा?" इति।

"न। इतोऽपि एकः प्रश्नः अस्ति" इति गुरुदत्तम् उक्त्वा महेशः श्रीगौरीं पश्यन्– "प्रथमम् आधारीकृत्य सर्वे मानवाः जीवन्ति। द्वितीयस्य अभावात् ग्रामे जनाः हाहाकारं कुर्वन्ति। तृतीयचतुर्थयोः अभावे, जनजीवनम् अस्तव्यस्तं भवेत्, तयोः परस्परयोगे तु सर्वनाशः भवितुम् अर्हति। पञ्चमः तु अनन्तः सर्वव्यापी च। एते पञ्च के इति जानाति चेत् वदतु तावत्" इति उक्तवान्।

श्रीगौरी अल्पेन मन्दहासेन क्षणकालं शिरः अवनमय्य स्थित्वा अन्ते 'न जानामि' इति शिरश्चालनेन सूचितवती।

महेशः विजयगर्वेण गुरुदत्तं पश्यन्– "मम पक्षस्य एव जयः जातः। एषा परीक्षायां पराजिता चेदपि एतस्याः बुद्धिमत्तया अहं सन्तुष्टः अस्मि। मम मातापित्रोः स्नुषात्वेन एतां प्रेषयितुं सन्नाहं करोतु" इति।

अनन्तरम् एकमासाभ्यन्तरे महेश-श्रीगौर्योः विवाहः यथाविधि सम्पन्नः। विवाहानन्तरं पतिगृहम् आगता श्रीगौरी कदाचित् पतिम् उक्तवती– "आर्य! मया किञ्चित् वक्तव्यम् अस्ति" इति।

"किं तत्? वदतु तावत्" इति उक्तवान् महेशः।

"विवाहात् पूर्वं भवता अन्तिमः प्रश्नः पृष्टः खलु? तस्य उत्तरम् एवम् अस्ति – ते पञ्च – पृथिवी, जलम्, अग्निः, वायुः, आकाशः इत्येतानि पञ्च भूतानि। भूमेः आधारेण एव सर्वे तिष्ठन्ति। द्वितीयस्य जलस्य अभावेन लोके हाहाकारः सहजः एव। यतः जीवनाधारभूतं तत्। तृतीयः अग्निः, चतुर्थश्च वायुः। अनयोः अभावे लोके अस्तव्यस्तता सहजा। तयोः परस्परयोगे च महान् दाहः भवेत्। पञ्चमः आकाशः निरवधिकः। एतत् एव खलु युक्तम् उत्तरम्?" इति उक्तवती श्रीगौरी।

एतत् श्रुत्वा महेशः पृष्टवान्– "एवम् उत्तरं जानती अपि भवती तदा एव किमर्थम् उत्तरं न दत्तवती?" इति।

तदा श्रीगौरी उक्तवती– "प्रथमः द्वितीयश्च प्रश्नः यदा पृष्टः तत्समये भवतः मुखे आतङ्कः सहजतया दृश्यते स्म। अन्तिमेन प्रश्नेन वा प्रतिस्पर्धी पराजेतव्यः इति भवतः विचारः आसीत्। किन्तु प्रतिक्षणं मद्विषयिणी प्रीतिः वर्धमाना अस्ति इति भवन्मुखदर्शनात् एव मया लक्षितम्। अहम् अन्तिमप्रश्नस्य अपि उत्तरं यदि वदेयं तर्हि भवतः पराजयः अभविष्यत्। भाविपतेः पराजयम् अहं न इष्टवती। अतः उत्तरं जानती अपि मौनं स्थितवती" इति।

पत्न्याः चातुर्यस्य विवेकस्य सूक्ष्मदर्शितायाश्च विषये मनसा सन्तोषं प्रकटयन् महेशः उक्तवान्– "एवं तर्हि वस्तुतः ममैव पराजयः इति चिन्तयति वा भवती?" इति।

तदा श्रीगौरी हसन्ती उक्तवती– "तत् कथम्? पराजयः ममैव इति व्यक्तं तद्दिने एव अङ्गीकृतवती खलु अहम्?" इति।

महेशः तृप्त्या हसन्– "आस्तां तावत्, वस्तुतः अहम् एव पराजितः स्यां, किन्तु तस्य फलरूपेण तु भवती प्राप्ता। अतः उत्तमम् एव फलं प्राप्तं मया" इति उक्तवान्।





# नेत्रलेपनौषधम्

गणेशपुरे पूर्वं विश्वनाथः नाम वैद्यः आसीत्। तस्य हस्तगुणः अतीवसमीचीनः इति प्रसिद्धिः आसीत्। सः चिकित्सार्थम् आगतानां सकाशात् अधिकं धनं न स्वीकरोति स्म।

एकदा सः किञ्चन औषधं निर्मातुम् इच्छन् अट्टम् आरुह्य तत्रत्यान् ताडपत्रग्रन्थान् अधः आनीतवान्। अन्वेषणसमये सः नेत्रलेपननामकस्य औषधस्य निर्माणक्रमस्य विवरणम् अकस्मात् पठितवान्। नेत्रलेपनौषधेन ये नेत्रे लेपयन्ति ते भूमिस्थान् सर्वान् पदार्थान् द्रष्टुं शक्नुवन्ति स्म। एतादृशं विशिष्टम् औषधं कथं निर्मातव्यम् इति ताडग्रन्थे सविस्तरं निरूपितम् आसीत्।

विश्वनाथः एतस्य औषधस्य निर्माणे उत्सुकः जातः। सः तद्दिने एव अरण्यं गत्वा अपेक्षितानि मूलानि आनीय शोषयित्वा चूर्णीकृत्य ग्रन्थोक्तक्रमेण नेत्रलेपनं सज्जीकृतवान्। अनन्तरं भानुवासरयुक्तायाम् अमावास्यायां तेन नेत्रे विलिप्य ग्रामात् बहिः निर्गतवान्। एवं गमनसमये तेन भूमेः अन्तः विद्यमानानि वस्तूनि दर्पणे इव दृष्टानि। कुत्रचित् तृणमय्यां भूमौ सः निधीनां पात्राणि अपि दृष्टवान्।

यत्र तेन निधिः दृष्टः तच्च क्षेत्रं भूस्वामिनः। भूमेः अधः पुरुषप्रमाणके प्रदेशे यद्यत् भवति तत्सर्वं तस्याः भूमेः यजमानस्य एव भवति। अतः वैद्यः विश्वनाथः निधिविषयं भूस्वामिनं वक्तुं निश्चितवान्। यत्र निधिः दृष्टः तत्र अभिज्ञानार्थं दण्डद्वयं निखन्य गृहं प्रत्यागतवान्। तावता रात्रिः जाता इत्यतः सः– 'श्वः भूस्वामिनं निवेदयिष्यामि' इति चिन्तितवान्।



भोजनानन्तरं यदा सः निद्रायां निलीनः आसीत् तदा कश्चन विचित्रः शब्दः जातः। एतत् श्रुत्वा अकस्मात् जागरितः अभवत् विश्वनाथः। तदा तेन पुरतः वायौ दोलायमानः कश्चन पिशाचः दृष्टः। एतत् दृष्ट्वा यद्यपि सः क्षणकालं स्तब्धः, किन्तु अनन्तरक्षणे धैर्यं प्राप्य पृष्टवान्– "कः भवान्?" इति।

पिशाचः विश्वनाथं तीक्ष्णदृष्ट्या पश्यन् अवदत्– "भोः मां पृच्छति खलु–'भवान् कः' इति! आकारेण एव खलु ज्ञायते अहं पिशाचः इति। पुनः किमर्थं पृच्छति?" इति।

"अस्तु तावत्। मानवस्य मम समीपे पिशाचस्य भवतः किं कार्यम्?" इति धैर्येण एव पृष्टवान् विश्वनाथः।

तदा पिशाचः अट्टहासपूर्वकं विश्वनाथम् अवदत्– "भवान् मानवः वैद्यश्च इति जानामि अहम्। अद्य सायं भवान् ग्रामसीमायां स्थिते क्षेत्रे दण्डद्वयं निखन्य आगतवान् खलु? तत् किमर्थम्?" इति।

"किं दण्डस्य निखननम् अपराधाय भवति?" इति प्रश्नं कृतवान् विश्वनाथः।

तदा पिशाचः क्रोधेन– "भोः, विनाकारणं कोऽपि दण्डनिखननं न करोति। मां मा वञ्चयतु भोः। तत्रत्यः निधिः भवता कथमपि ज्ञातः। एतावत् तु स्मरतु – स च निधिः मम यजमानस्य उत्तराधिकारिणः निमित्तं मया रक्ष्यमाणः अस्ति। मम यजमानस्य पौत्रः माधवः तं प्राप्नुयात्। अन्यः कोऽपि तं निधिं प्राप्तुं यदि प्रयत्नं कुर्यात् तर्हि तस्य कुलं समूलं नश्येत्" इति उक्त्वा ततः अदृश्यः अभवत्।

पिशाचस्य वचनं श्रुत्वा विश्वनाथः न भीतः। किन्तु तस्य मनसि कश्चन धर्मसन्देहः उत्पन्नः। यत्र निधिः दृष्टः सा भूमिः वस्तुतः माधवस्य पितामहस्य एव आसीत्। किन्तु माधवस्य पिता अपव्ययं कृतवान् इति कारणतः सा भूमिः विक्रीता अभवत्। भूस्वामी योग्येन मूल्येन तां भूमिं क्रीतवान् आसीत्। अतः इदानीं भूमेः यजमानः भूस्वामी एव। एवं स्थिते तस्यां भूमौ स्थितः निधिः माधवं प्राप्नुयात् इति पिशाचः यत् वदति तत् तावत् उचितं न इति विश्वनाथस्य विचारः। तर्हि इदानीं किं करणीयम् इति बहुधा चिन्तितवान् वैद्यः विश्वनाथः। अन्ते सः

एकम् उपायं चिन्तितवान्।

अनन्तरदिने सः अञ्जलिद्वयमितान् आर्द्रीकृतान् चणकान् शिवलिङ्गं च स्वीकृत्य यत्र निधिः दृष्टः तत् क्षेत्रं गतवान्। यत्र निधिः दृष्टः ततः अल्पे एव दूरे गर्तं कृत्वा आर्द्रीकृतान् चणकान् स्थापयित्वा तदुपरि शिवलिङ्गं संस्थाप्य गर्तं मृत्तिकया यथापूर्वं प्रपूर्य गृहं प्रत्यागतवान्।

तद्दिने सायङ्काले शिवलिङ्गस्य अर्धः भागः भूमितः उपरि दृश्यते स्म। एतत् दृष्ट्वा कश्चित् ग्रामं गत्वा निवेदितवान्। क्षणमात्रेण वार्ता ग्रामे प्रसृता। पूजानमस्कारादिकं महत्या भक्त्या प्रवृत्तम्।

स्वकीयः उपायः फलितः इति वैद्यः विश्वनाथः सन्तुष्टः। सः ग्रामज्येष्ठैः द्वित्रैः सह मिलित्वा भूस्वामिनः गृहं गतवान्।

भूस्वामी लिङ्गोद्भववार्तां श्रुत्वा अतीव सन्तुष्टः। "मम सौभाग्यात् एव देवः मदीये क्षेत्रे उद्भूतः। यत्र देवस्य उद्भवः जातः तत् क्षेत्रं देवाय अर्पयामि। तत्र आलयः निर्मातव्यः। ग्रामस्थेभ्यः धनं सङ्ग्रहणीयम्। प्रथमं दानं ममैव भवतु" इति उक्त्वा सहस्रं रूप्यकाणि दत्तवान्।

विश्वनाथः ग्रामज्येष्ठानां सम्मुखं देवालयस्य आधारभूमेः निर्माणार्थं भूमिपूजाव्यवस्थां भूमिखननव्यवस्थां च कारितवान्। खननसमये निधिः लब्धः। 'सर्वं देवस्य एव लीला!' इति उद्गारं प्रकटितवन्तः ग्रामीणाः। अल्पे एव काले तत्र रमणीयः शिवालयः निर्मितः अभवत्। ततः समीपे स्थिते तिन्त्रिणीवृक्षे निवसन् पिशाचः एतत्सर्वं जागरूकतया परिशीलयन् आसीत्। वैद्यस्य बुद्धिमत्ताविषये आश्चर्यं प्रकटयन् सः मौनम् अतिष्ठत्।

स च निधिः कस्यचित् स्वार्थाय न उपयुक्तः आसीत्, अपि तु, मङ्गलकार्यार्थम् उपयुक्तः आसीत्। अतः पिशाचः निधिरक्षणकार्यात् मुक्तः अभवत्। समाधानेन निःश्वसन् सः ततः अदृश्यः अभवत्।





# पञ्च प्रश्नाः

[२]

विश्रान्त्यादिकं समाप्य धीरसिंहः अनन्तरदिने सुलोचनासमीपम् आगतवान्। सुलोचना तं गौरवेण स्वागतीकृत्य उचिते आसने उपवेश्य उक्तवती– "इतः पश्चिमदिशि त्रिंशद्योजनदूरे काचित् नदी प्रवहति। तस्याः नद्याः जलं सदा रक्तमयं दृश्यते। तथा किमर्थं दृश्यते? सा नदी कुतः प्रवहति? तस्याः नद्याः रहस्यं किम्? एषः एव मम द्वितीयः प्रश्नः। एतस्य युक्तम् उत्तरं ज्ञात्वा आगत्य वदतु" इति।

धीरसिंहः नवदिनात्मकम् अवधिं स्वीकृत्य अश्वम् आरुह्य पश्चिमदिशि प्रयाणम् आरब्धवान्। एवं गच्छन् सः किञ्चन अरण्यं प्राप्तवान्। अरण्यमार्गेण गच्छन् सः रक्तवर्णेन जलेन युक्तां नदीं दृष्टवान्। एषा एव रक्तनदी इति ज्ञातवान् सः।

सः अश्वात् अवतीर्य पादाभ्यां तीरम् अनुसृत्य अग्रे गतवान्। सायङ्काले सूर्यः अस्ताचलस्य शिखरे स्थितः, सागरे मज्जनार्थं सन्नाहं कुर्वन् आसीत्। तत्समये धीरसिंहः लघुपर्वतस्य उपरि स्थितस्य कासारस्य समीपं गतवान्। तस्मात् कासारात् एव नदी उद्गता इत्येतम् अंशं ज्ञातवान् सः।

तस्मिन् कासारे वृष्टिः इव बिन्दुरूपेण रक्तं पतत् आसीत्। धीरसिंहः उपरि दृष्टिं प्रसारितवान्। कासारस्य मध्यभागे स्थितस्य



धीरसिंहं दृष्ट्वा विकटाट्टहासम् अकुर्वन्। धीरसिंहः आश्चर्येण एतत् पश्यति। हासयुक्तानि तानि मुखानि एकैकशः अधः कासारे पतितानि। सर्वाणि मुखानि यदा पतितानि तदा सरोवरस्थं रक्तम् अदृश्यम् अभवत्। सरोवरमध्ये इदानीम् अपूर्वम् उन्नतं भवनं दृश्यते। भीकरः कासारः कथम् अदृश्यतां गतः इति न जानाति धीरसिंहः।

तस्मिन् भवने सुन्दरे विशाले च मण्डपे रत्नखचितं सिंहासनम् आसीत्। क्षणाभ्यन्तरे सखीभिः परिवृता काचित् सौन्दर्यखनी राज्ञी सिंहासनम् आरुह्य उपविश्य गाम्भीर्येण परितः दृष्टिं प्रसारितवती।

महावृक्षस्य असङ्ख्याः शाखाः सर्वत्र प्रसृताः आसन्। तासु शाखासु स्त्रीणां मुखानि उत्तोलितानि दृश्यन्ते स्म। सर्वेभ्यः मुखेभ्यः धाराकारेण रक्तं स्रवति स्म। एतत् भीभत्सरूपं रोमञ्चकरं घोरं दृश्यं दृष्ट्वा धीरसिंहः "हा हन्त!" इति उद्गारं प्रकटितवान्।

धीरसिंहः एतत् घोरं दृश्यं तदेकदृष्ट्या पश्यन् एतस्य पृष्ठभूमिः का स्यात् इति सगम्भीरम् आलोचयन् आसीत्। अत्रान्तरे सूर्यास्तकारणतः अन्धकारः व्याप्तः। किन्तु पुनः अल्पे एव काले स च प्रदेशः विलक्षणया कान्त्या आवृतः। सा च कान्तिः कुतः आगच्छति इति न जानाति धीरसिंहः।

वृक्षशाखासु लम्बमानानि मुखानि

तदा काश्चन परिचारिकाः पञ्चभक्ष्य-परमान्नोपेतं भोजनम् आनीय सर्वाभ्यः परिवेषितवत्यः। ताः स्त्रियः दूरस्थं धीरसिंहं दृष्ट्वा सङ्केतेन भोजनार्थम् आहूतवत्यः। धीरसिंहस्य तु महती बुभुक्षा आसीत् एव। अतः सः गत्वा आसने उपविश्य भक्ष्याणि खादन् ताः पृष्टवान्– "भवत्यः काः? किम् एतत् विचित्रम्?" इति।

कस्याश्चित् अपि उत्तरं न आगतम्। धीरसिंहः पुनः पुनः तं प्रश्नं पृष्टवान्। तदानीम् अपि मौनम् एव उत्तरम्। भोजनकूटस्य समाप्तेः अनन्तरं ताः नृत्यं कृतवत्यः। तासां गानात् एकं तु निश्चितं यत् ताः मूकाः न इति। 'किमर्थम् एताः स्वविषये किमपि न वदन्ति? प्रायः कस्माच्चित् भीतिः

स्यात् एतासाम्' इति आलोचितवान् धीरसिंहः।

प्रातःकालसमये तत् भवनं रिक्तं जातम्। पुनश्च कासारः तत्र दृष्टः। धीरसिंहः यथापूर्वं कासारस्य तीरे स्थितः आसीत्। स्त्रियः तु पुनरपि मुण्डरूपेण परिवृत्ताः सत्यः वृक्षस्य शाखायां लम्बमानाः आसन्। तासां कण्ठभागतः यथापूर्वं रक्तधारा प्रवहति स्म।

'कासारस्य रात्रौ एकं रूपं चेत् दिने अपरं रूपम्। एतस्य रहस्यं ज्ञातव्यम् एव' इति दृढनिश्चयं कृत्वा धीरसिंहः परितः परीक्षादृष्ट्या दृष्टवान्। दिगन्तपर्यन्तम् अपि तेन न कश्चित् दृष्टः। अतः सः साक्षात् पश्चिमदिशि प्रयाणम् अनुवर्तितवान्।

किञ्चिद्दूरं गमनानन्तरं तेन काचित् गुहा दृष्टा। धीरसिंहः अवनम्य गुहायाः अन्तः दृष्टिं प्रसारितवान्। गुहायां कश्चन मुनिः नेत्रे निमील्य ध्याने निमग्नः आसीत्। सः मुनिः तपसः साक्षात्मूर्तिः इव दृश्यते स्म। धीरसिंहः गुहायाः अन्तः गत्वा मुनिं साष्टाङ्गं नमस्कृतवान्।

मुनिः मन्दं नेत्रे उद्घाट्य पृष्टवान्– "कः भवान्?" इति। धीरसिंहः आत्मनः परिचयं सविस्तरं निवेद्य आगमनकारणम् अपि निवेद्य मुनिम् उक्तवान्– "भवादृशस्य महात्मनः अनुग्रहः अस्ति चेत् असाध्यानि कार्याणि अपि सिद्धानि भवन्ति। अतः मम मनोभीष्टं पूरितं यथा भवेत् तथा वरेण अनुगृह्णातु" इति।



"वत्स! राज्ञीसदृशी परमसुन्दरी काचित् युवतिः भवता दृष्टा खलु? तस्याः नाम सुनन्दिनी इति। सा अग्निकुम्भनामकस्य महामान्त्रिकस्य भागिनेयी। प्राप्तवयस्का सा कञ्चित् तरुणं परिणेतुं सङ्कल्पितवती आसीत्। अग्निकुम्भः तत् निराकृतवान्। कोपेन सः तां तस्याः सखीः च मायया बद्धवान्। यदा अग्निकुम्भः मरणं प्राप्स्यति तदा एव सुनन्दिनी अपि मायाबन्धात् विमुक्ता भविष्यति। तस्य महामान्त्रिकस्य अग्निकुम्भस्य मारणार्थं तु अपरिमितं धैर्यम् आवश्यकम्। तादृशः यावत् न लभ्यते तावत् तासां गतिः एवम् एव" इति उक्तवान् मुनिः।

तदा धीरसिंहः विनयेन उक्तवान्–



"मुनिवर्य! भवतः अनुग्रहः यदि स्यात् तर्हि अहं तं महामान्त्रिकम् अग्निकुम्भं मारयित्वा सुनन्दिनीं बन्धविमुक्तां करिष्यामि" इति।

मुनिः धीरसिंहम् आपादमस्तकं परिशील्य– "धीरसिंह! अग्निकुम्भं मारयितुम् अर्हता भवतः अस्ति इति तु सत्यम् एव। किन्तु अग्निकुम्भः महाक्रूरी। अन्यच्च वञ्चनादितन्त्रेषु अतिनिपुणः महामान्त्रिकः सः। तस्य मायाप्रभावः भवतः उपरि परिणामं यथा न कुर्यात् तथा कर्तुं एकं मन्त्रम् उपदिशामि। त्रिकरणशुद्ध्या भवान् एतं मन्त्रं पठति चेत् तं सुलभतया जेतुम् अर्हति" इति उक्त्वा धीरसिंहस्य कर्णे मन्त्रम् उपदिष्टवान्।

धीरसिंहः मुनिं कृतज्ञतापूर्वकं नमस्कृतवान्। मुनिः तस्य शिरसि दण्डं स्थापयित्वा मन्त्रं जपन् मन्दं चालितवान्। तस्य प्रभावतः धीरसिंहः आकाशचुम्बिनः महापर्वतस्य मूले गत्वा स्थितवान्।

स च पर्वतः चित्रविचित्रैः रमणीयैः पुष्पैः अलङ्कृतः आसीत्। 'मुनिना सूचितम् अग्निकुम्भस्य दुर्गम् एतस्य पर्वतस्य उपरि स्यात्' इति आलोच्य धीरसिंहः पर्वतम् आरोढुम् उद्युक्तः जातः। तदा क्रूराः व्याघ्राः, सिंहाः, भल्लूकाश्च गर्जनं कुर्वन्तः धीरसिंहस्य उपरि आक्रमणं कृतवन्तः। धीरसिंहः अविचलः सन् मुनीश्वरेण उपदिष्टं मन्त्रं त्रिवारं मनसि उच्चारितवान्। तदा ते क्रूरा मृगाः अदृश्यतां गतवन्तः। 'जयतु मुनीश्वरः' इति वदन् धीरसिंहः अग्रे गतवान्।

किञ्चिदग्रे यदा गतं तदा धीरसिंहस्य पादौ भूमौ दृढं लग्नौ जातौ। सः एकम् अपि पदम् अग्रे स्थापयितुं न शक्तवान्। एतदपि महामान्त्रिकस्य मायायाः प्रभावः इति आलोच्य धीरसिंहः मुनेः मन्त्रं जपितवान्। तदा सः यथापूर्वं चलितुं शक्तः अभवत्।

पर्वतस्य उपरि उपविष्टः अग्निकुम्भः धीरसिंहस्य आगमनं मायादृष्ट्या ज्ञातवान् एव। धीरसिंहः कः, किमर्थम् आगच्छन् अस्ति इत्यादिकं पूर्णतः जानाति सः। अतः सः, धीरसिंहः उपरि यथा न आगच्छेत् तथा एकम् उपायं कृतवान्। स्वमायाजालेन

मायासुनन्दिनीं सृष्ट्वा, काश्चन सखीः अपि सृष्ट्वा, ताः सर्वाः धीरसिंहसमीपं प्रेषितवान्।

सखीभिः परिवृता मायासुनन्दिनी मन्दहासं प्रकटयन्ती धीरसिंहस्य अभिमुखम् आगतवती। ताः दृष्ट्वा धीरसिंहः– "अहो आश्चर्यम्! कासारमध्ये वृक्षे मुण्डरूपेण लम्बमानाः भवत्यः एतावच्छीघ्रं कथम् अत्र आगतवत्यः? महामुनेः मन्त्रप्रभावतः किं बन्धविमुक्ताः जाताः?" इति पृष्टवान्।

"एतत् मम मातुलस्य दयया सम्पन्नम्। सः करुणया अस्मान् बन्धविमुक्ताः कृतवान्। आगच्छतु अस्माभिः सह। सन्तोषकूटे भागं गृह्णातु नाम" इति हसन्ती उक्तवती मायासुनन्दिनी।

धीरसिंहः तस्याः वचने विश्वस्य ताम् अनुसृतवान्। सा मधुरैः वचनैः धीरसिंहं मोहयन्ती विषमिश्रितं पानीयं पायितवती। एतेन धीरसिंहः मूर्च्छां गतवान्।

मायासुनन्दिनी तं मायया बद्ध्वा अग्निकुम्भस्य पुरतः स्थापितवती। अग्निकुम्भः धीरसिंहं तीक्ष्णदृष्ट्या पश्यन्– "एतं परमदुष्टं बद्ध्वा ज्वालाकूपे पातयन्तु नाम" इति कठोरम् आज्ञप्तवान्।

अत्रान्तरे धीरसिंहः सचेतनः जातः। सः प्रवृत्तां वञ्चनां ज्ञातवान्। सः मुनिवरेण बोधितं मन्त्रं जपितवान्। अतः सः ज्वालाकूपे पातितः चेदपि अक्षतः एव स्थितवान्। मल्लिकाशय्यातः उत्थितः इव धीरसिंहः सुरक्षितं ज्वालाकूपतः बहिः आगतवान्।

एतत् दृष्ट्वा इतोऽपि कुपितः अग्निकुम्भः





"एतं पुनरपि बद्ध्वा कारागारे स्थापयन्तु" इति भटान् आज्ञापितवान्।

कारागारं गतः धीरसिंहः— 'कस्यचित् मैत्रीं विना अत्रत्यस्य रहस्यस्य भेदनम् अशक्यम्' इति आलोच्य कारागाररक्षकेण सह मधुरवार्तालापम् आरब्धवान्। वार्तालापेन तेन ज्ञातं यत् तस्य नाम करुणाकरः इति। सः अपि अग्निकुम्भं द्वेष्टि इति, गत्यन्तराभावात् तदधीनः जातः इति च। सुनन्दिनी एतम् एव परिणेतुम् इष्टवती आसीत् इत्यपि तेन ज्ञातम्। अतः धीरसिंहः तम् उक्तवान्— "भोः! इदानीं भवान् यत् मिलितः तत् लाभाय एव इति अहं भावयामि। मां भवान् कारागारतः यदि मोचयेत् तर्हि अहम् अग्निकुम्भं मारयित्वा सुनन्दिनीं भवता सह योजयामि" इति।

तदा करुणाकरः सन्देहेन उक्तवान्— "भोः, अग्निकुम्भस्य मारणं तथा सुलभतया न भवति। सः महाक्रूरी मान्त्रिकः च। सः दुर्गे सुरक्षितरूपेण निवसति। अन्यच्च तेन स्वमायया त्रिंशत्सहस्रपादोन्नतं मेघमण्डलं किञ्चन निर्मितम् अस्ति। यदा अपायः आपतति तदा सः मेघमण्डलं प्रविशति। केनापि तत्र गन्तुं न शक्यते एव" इति।

"दुष्टस्य तन्त्राणि मानवशक्त्यतीतानि भवन्तु नाम। किन्तु धर्ममार्गेण यः कार्यं करोति तस्यैव जयः भविष्यति। एतत् तु त्रिकालाबाधितं सत्यम्। अतः भवान् मां प्रथमं बन्धविमुक्तं करोतु। दुर्गस्य स्थलं सूचयतु च। अनन्तरं यत् करणीयं तत् अहं करिष्यामि" इति उक्तवान् धीरसिंहः।

करुणाकरः धीरसिंहस्य वचनेन धैर्येण च तृप्तः सन् सन्तोषेण कारागारस्य द्वारम् उद्घाटितवान्। धीरसिंहेन सह अग्निकुम्भस्य दुर्गस्य दिशि प्रस्थितवान् च।

मार्गे अनेके विचित्राः वृक्षाः दृष्टिगोचराः जाताः। तान् प्रदर्शयन् उक्तवान् करुणाकरः— "वस्तुतः एते वृक्षाः न। ये मारयितुम् आगताः तान् स्वमन्त्रशक्त्या एवं वृक्षरूपेण बन्धने स्थापितवान् अस्ति अग्निकुम्भः" इति।

धीरसिंहः मुनीश्वरं भक्त्या स्मरन् एते वृक्षाः निजरूपेण तिष्ठन्तु' इति वदन् मन्त्रं

जपितवान्। अनन्तरक्षणे सर्वे वृक्षाः मानवरूपेण स्थितवन्तः। ते सर्वे परमसन्तोषेण सैनिकाः इव धीरसिंहस्य साहाय्यार्थम् उद्युक्ताः जाताः।

दुर्गस्य अन्तः उपविष्टः राक्षसः स्वमायाशक्त्या सैन्येन सह आगच्छन्तं धीरसिंहं दृष्टवान्। तत्क्षणे सः स्वमायया तं प्रदेशम् अन्धकारावृतं कृतवान्। समग्रः पर्वतः कम्पमानः जातः। एतत् दृष्ट्वा धीरसिंहेन सह स्थिताः भीत्या हाहाकारं कृतवन्तः। तदा धीरसिंहः मुनिना उपदिष्टं मन्त्रं जपितवान्। पर्वतस्य कम्पनं स्थगितम्। अन्धकारः दूरङ्गतः।

अनन्तरम् अग्निकुम्भः मायाशक्त्या धीरसिंहस्य परिवारे फूत्कुर्वतः सर्पान् सृष्टवान्। तीव्रां ज्वालां, घोरं धूमं चापि सृष्टवान्। एतत्सर्वं धीरसिंहः मुनीन्द्रेण उपदिष्टेन मन्त्रेण दूरीकृतवान्।

इतः परं किमपि कर्तुम् अशक्तः अग्निकुम्भः दुर्गात् अदृश्यः भूत्वा मेघमण्डलं प्रविष्टवान्।

धीरसिंहस्य सैन्यम् दुर्गस्य अन्तः प्रवेशम् अकरोत्। तत्र सुवर्णमयानि भवनानि, सुन्दराणि उद्यानानि च आसन्। स च प्रदेशः निर्मानुषः चेदपि तत्र अत्युत्कृष्टाः आहारपदार्थाः सिद्धाः आसन्। धीरसिंहस्य सहचराः नितरां बुभुक्षिताः आसन्। ते तम् आहारं खादित्वा शिरोभ्रमणं प्राप्य अधः पतितवन्तः। धीरसिंहः समीपस्थात् सरोवरतः जलम् आनीय मुनिना उपदिष्टेन



मन्त्रेण अभिमन्त्र्य तेन सर्वेषाम् उपरि सेचनं कृतवान्। सर्वे निद्रातः इव उत्थाय उपविष्टवन्तः। करुणाकरस्य सूचनानुसारं धीरसिंहः दुर्गात् बहिः आगत्य शिलायाः उपरि उपविश्य आकाशं पश्यन् मुनिना उपदिष्टं मन्त्रं पुनः पुनः जपन् 'राक्षसस्य मेघमण्डलं नश्यतु' इति प्रार्थितवान्। अनन्तरक्षणे मेघमण्डलं सशब्दं भग्नं खण्डशः भूमौ पतितम्। अग्निकुम्भः अपि भूमौ पतितः सन् शिरसः भङ्गेन प्राणान् त्यक्तवान्। सर्वे हर्षोद्गारं कृतवन्तः।

अनन्तरं धीरसिंहः दुर्गरक्षणार्थं कांश्चन नियुज्य रक्तकासारस्य दिशि गतवान्। अत्रान्तरे सुनन्दिनी सखीभिः सेविकाभिः च परिवृता दुर्गस्य दिशि एव आगच्छन्ती दृष्टा। महामान्त्रिकस्य अग्निकुम्भस्य मरणात् सा मायाबन्धात् विमुक्ता आसीत्।

समीपम् आगतां सुनन्दिनीम् उक्तवान् धीरसिंहः– "एतत् सर्वं मुनीन्द्रस्य अनुग्रहात् सम्पन्नम्। तस्य अनुग्रहात् एव निमित्तमात्रम् अहम् अग्निकुम्भं मारितवान्। अतः एव भवती मायाबन्धात् विमुक्ता जाता। इतःपरं भवती प्रियतमं करुणाकरं परिणीय सुखेन चिरकालं जीवतु" इति।

अनन्तरं धीरसिंहः सहचराणां साहाय्येन सुनन्दिनी-करुणाकरयोः विवाहं सवैभवं निर्वर्तितवान्। एतं कार्यक्रमं समाप्य सः महामहिमशालिनः मुनेः समीपं गत्वा तं साष्टाङ्गं नमस्कृत्य प्रवृत्तं समग्रं निवेदितवान्। मुनेः अनुज्ञां प्राप्य कौशाम्बीं प्रत्यागतवान् च।

सुलोचनां दृष्ट्वा धीरसिंहः रक्तनद्याः उत्पत्तिकारणं सविस्तरं निवेदितवान्। तदा सुलोचना– "भवता उक्तं सत्यम् एव। तस्य मान्त्रिकस्य मरणस्य अनन्तरं तस्यां नद्यां निर्मलं जलं प्रवहति इति मया श्रुतम्। भवान् विश्रान्तिं स्वीकृत्य श्वः मां पश्यतु। तृतीयं प्रश्नं श्रावयामि" इति उक्त्वा धीरसिंहम् अतिथिगृहं प्रति प्रेषितवती।

–(अनुवर्तते)






# विद्यायाः पात्रम्

हस्तात् मुक्तं कन्दुकं यथा प्रत्यागच्छति तथैव त्रिविक्रमः अपि अनन्तरदिने वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! विवेकोदयः कदा कस्य भवति इति वक्तुं न शक्यते। केचन अल्पेन प्रयत्नेन स्वस्वरूपज्ञानं प्राप्य विवेकिनः भवन्ति। पुनः केचन स्वस्वरूपज्ञानं प्राप्तुम् एव अशक्ताः सन्तः मूर्खाः एव तिष्ठन्ति। भवान् मूर्खः वा विवेकी वा इति मम इतोऽपि सन्देहः एव। तत् यथाकथम् अपि भवतु नाम। भवतः मार्गायासस्य परिहारार्थम् एकां रमणीयां कथां श्रावयामि। कथां शृण्वन् गच्छतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं कोसलदेशे राजधान्याः समीपे

## वेतालकथा



विद्यानन्दो नाम मुनिः गुरुकुलं चालयन् आसीत्। विद्यानन्दस्य बोधनशक्तिः अपूर्वा। परममूर्खः अपि एतस्मिन् गुरुकुले पठति चेत् महाज्ञानी भविष्यति इति प्रथा श्रूयते स्म।

कोसलराजस्य द्वे पत्न्यौ। ज्येष्ठपत्न्याः पुत्रः विजयः बुद्धिमान्। सः राजभवने एव विद्याभ्यासं कुर्वन् षोडशे वयसि सकलशास्त्रपारङ्गतः जातः।

द्वितीयपत्न्याः पुत्रः अजयः। मातापित्रोः अतिलालनात् हेतोः सः विद्यायाम् आसक्तः न जातः। पुत्रस्य भाविजीवनविषये चिन्तयन्ती कनिष्ठा राज्ञी राजानम् उक्तवती– "अतिलालनात् आवयोः पुत्रः अजयः विद्याभ्यासे सर्वथा अनासक्तः जातः। एतावता यत् प्रवृत्तं तत् तु गतम् एव। इतःपरं वा एतस्य पाठने प्रयत्नः करणीयः। सर्वे एतं विजयेन तोलयन्तः 'मन्दबुद्धिः' इति वदन्ति। एतत् अपमाननम् अहं कथं सोढुं शक्नोमि? जनानां वचनं शृण्वत्याः मम हृदयं नितरां सन्तप्तं भवति" इति।

तदा राजा– "योग्यस्य गुरोः नियुक्तिः न क्लेशाय। किन्तु ततः एषः पठेत् खलु? अश्वं जलपर्यन्तं नेतुं वयं शक्नुमः। जलं तु अश्वेन एव पातव्यम्। अजयः बुद्धिमान् भवितुं न अर्हति। जनाः यत् वदन्ति तत् सत्यम् एव" इति उक्तवान्।

"प्रयत्नम् अकृत्वा एव सर्वं निर्णीतम् इव वदति खलु? योग्यः गुरुः लब्धः चेत् एषः अपि विद्यायाम् आसक्तिं प्राप्नुयात्। शास्त्रज्ञानेन अग्रजं विजयम् अतिशेतुम् अपि अर्हति" इति उक्तवती कनिष्ठराज्ञी।

राजा क्षणकालम् आलोच्य उक्तवान्– "राजधान्याः समीपे विद्यानन्दमुनेः आश्रमः अस्ति। सः परममूर्खम् अपि बुद्धिमन्तं कर्तुं शक्नोति इति श्रूयते। किन्तु आश्रमस्य नियमाः कठोराः भवन्ति इति श्रुतम्। तत्र धनिक-निर्धनपुत्रयोः राज-प्रजापुत्रयोः च भेदः न भवति। सर्वेषां समानः नियमः। अतः एव अहं विद्यानन्दस्य योग्यतां जानन् अपि विजयस्य विद्याभ्यासार्थम् अन्याम् एव व्यवस्थां कृतवान्। अजयः तु राजपुत्रः। सः गुरुकुलस्य कठोरं नियमं सोढुं शक्नुयात्

वा?" इति।

तदा कनिष्ठराज्ञी उक्तवती– "अजयेन सह विजयम् अपि गुरुकुलं प्रेषयतु। आत्मीयः अन्यः भवति चेत् अजयस्य अपि सन्तोषः स्यात्। 'शास्त्रज्ञानं मया न सम्पादितम् इत्यतः मां केवलं गुरुकुलं प्रेषितवन्तः' इति भावना अपि तस्य मनसि न उद्भवेत्" इति।

राजा एतं प्रस्तावम् अङ्गीकृतवान्। सः स्वपुत्रौ अजयं विजयं च विद्यानन्दमुनेः गुरुकुलं प्रति प्रेषितवान्।

कानिचन दिनानि अतीतानि। 'पुत्रयोः विद्याभ्यासः कथं प्रचलति इति द्रष्टव्यम्' इति उद्देशेन राजा पत्नीभ्यां सह गुरुकुलं गतवान्। गुरुकुले अजयः महता उत्साहेन व्यवह्रियमाणः तैः दृष्टः।

पुत्रम् अजयं स्वसमीपम् आहूय प्रीत्या पृष्टवान् राजा– "वत्स! कुशली खलु? कथं प्रचलति विद्याभ्यासः?" इति।

"तात! मम गुरुः महाज्ञानी। तस्य सहवासतः मया अपि विद्याभ्यासे आसक्तिः प्राप्ता। सर्वे महता कालव्ययेन यानि शास्त्राणि पठन्ति तेषां सारं मां गुरुः अल्पेन कालेन एव बोधयति। अतः अहम् इदानीं बहूनि शास्त्रतत्त्वानि जानामि" इति उत्साहेन उक्तवान् अजयः।

तदा कनिष्ठराज्ञी तृप्तिं प्रदर्शयन्ती पुत्रम् उक्तवती– "वत्स! एतावता यद्यत् पठितं तत् सर्वं सङ्ग्रहेण एकैकशः वदतु नाम" इति।



"अम्ब! शास्त्रतत्त्वानि भवती कथं जानीयात्? शास्त्रतत्त्वानि आधारीकृत्य गुरुणा बह्व्यः कथाः उक्ताः। सर्वासु अपि कथासु महत् तत्त्वं निहितम् अस्ति" इति वदन् अजयः गुरुणा बोधिताः काश्चन कथाः उक्तवान्।

ताः सर्वाः कथाः मूर्खतासम्बन्धिन्यः। मया सर्वं ज्ञातम् इति, मत्तः अपि श्रेष्ठः कोऽपि नास्ति इति च ये गर्वेण व्यवहरन्ति तादृशानां मूर्खाणां व्यवहाराः तासु कथासु चित्रिताः आसन्।

ज्येष्ठा राज्ञी पुत्रार्थम् इतस्ततः दृष्टवती। तत्र कुत्रापि विजयः न दृष्टः तया। सा अजयं पृष्टवती– "भवतः अग्रजः कुत्र? सः अत्र कुत्रापि न दृश्यते खलु? तस्य विद्याभ्यासः

कथं प्रचलति?" इति।

"गुरुकुलप्रवेशानन्तरं मया पूर्वम् उक्ताः कथाः माम् अग्रजं च बोधितवान् गुरुः। नूतनान् छात्रान् सर्वान् सः एवम् एव बोधयति इति श्रुतम्। एताः कथाः श्रुत्वा अग्रजः निरुत्साही जातः। कारणं किमिति न जाने। सः इदानीं कुत्रचित् एकान्ते उपविश्य चिन्तयति, अथवा ग्रन्थालये उपविश्य ग्रन्थान् पश्यन् समयं यापयति। तस्य मुखे न उत्साहः, न हासः" इति उक्तवान् अजयः।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् राजा विजयम् आनेतुं कञ्चन भटं प्रेषितवान्। किञ्चित्कालानन्तरं विजयः तत्र आगतवान्। तस्य मुखं दृष्ट्वा आश्चर्येण पृष्टवान् राजा— "पुत्र! किमर्थम् एवं चिन्ताक्रान्तः इव दृश्यते भवान्? अस्माकम् आगमनवार्तां श्रुत्वा अपि किमर्थम् आगमने विलम्बं कृतवान्?" इति।

विजयः पितरं नमस्कृत्य विनयेन उक्तवान्— "कञ्चन ग्रन्थं परिशीलयन् आसम्। अतः आगमने किञ्चित् विलम्बः जातः। राजभवने गुरुमुखात् मया शास्त्राणां प्राथमिकपरिचयः प्राप्तः आसीत्। तावता एव अहम् आत्मानं शास्त्रपारङ्गतं मन्यमानः आसम्। अत्र आगमनानन्तरं मया कियत् ज्ञातव्यम् अस्ति इति काचित् कल्पना आगता। मम जीवने एषः अध्ययनकालः। अतः एकं क्षणम् अपि अहं व्यर्थम् अकुर्वन् पठन् अस्मि" इति।

अत्रान्तरे विद्यानन्दमुनिः तत्र आगतवान्। "प्रभो! भवतः आगमनं मया विलम्बेन



ज्ञातम्। अहं जपार्थम् उपविष्टः आसम् इत्यतः आगमने विलम्बः जातः। क्षन्तव्यः अहम्। शिष्याः यथोचितं स्वागतसत्कारं कृतवन्तः वा न वा इति न जानामि" इति राजानम् उक्तवान्।

राजा विद्यानन्दमुनिं नमस्कृत्य 'छात्रैः स्वागतसत्कारः सम्यक् एव कृतः' इति उक्त्वा पुत्रयोः वचनानि श्रावयित्वा पुनः उक्तवान्– "मया यथा चिन्तितं ततोऽपि भिन्नम् एव अत्र पश्यामि अहम्। मम पुत्रयोः विद्याभ्यासः कथं प्रचलति? . तयोः व्यवहारविषये भवतः कः अभिप्रायः?" इति।

"प्रभो! विजयः अत्र इतोऽपि द्वित्राणि वर्षाणि विद्याभ्यासं करोति चेत् सकलेषु शास्त्रेषु पारङ्गतः भवेत्। सः शास्त्रे, अध्यात्मव्यवहारे लौकिकव्यवहारे च समर्थः भविष्यति" इति।

"अस्तु तावत्, अजयः विद्याभ्यासे कथम् अस्ति?" इति पृष्टवान् राजा।

"अजयः अपि असाधारणप्रज्ञावान् एव। सः सकृद्ग्राही। एतावता एव तेन बहु ज्ञातम् अस्ति। एतादृशं बोधयितुं मम ज्ञानम् अपर्याप्तम्। अतः तम् अद्य एव प्रतिनेतुम् अर्हति भवान्" इति उक्तवान् विद्यानन्दमुनिः।

राजा मुनेः वचनं श्रुत्वा प्रतिक्रियां कामपि अप्रदर्श्य अजयं स्वसमीपम् आहूतवान्। अजयेन पत्नीभ्यां च सह राजधानीं प्रत्यागतवान् च।

वेतालः एवं कथां समाप्य अवदत्–



"राजन्! अजयं किमर्थं प्रतिप्रेषितवान् विद्यानन्दः? अजयः सकृद्ग्राही, तं बोधयितुं मम सामर्थ्यं नास्ति इति वदतः विद्यानन्दस्य वचनस्य तात्पर्यं किम्? 'विजयः भावी राजा। तस्य गुरुः अहम्। अतः विजयस्य प्रतिस्पर्धी कोऽपि न भवेत्' इति आलोच्य अजयं प्रतिप्रेषितवान् वा विद्यानन्दः? अथवा मूर्खम् अपि विद्यावन्तं कर्तुं शक्नोति इति विद्यानन्दविषये या प्रथा श्रूयते स्म सा मिथ्या स्यात् वा? एतेषां सन्देहानां योग्यं समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "मातापित्रोः पुरतः को वा गुरुः वदेत् 'भवतोः पुत्रः मूर्खः' इति? तत्रापि अजयः महाराजस्य पुत्रः। अतः मुनिः अजयं सकृद्ग्राहिणम् उक्तवान्। किन्तु भङ्ग्यन्तरेण सः मूर्खः इत्यपि सूचितवान्। आगतान् नूतनान् छात्रान् मूर्खकथां बोधयन् परीक्षते विद्यानन्दः। एताः कथाः श्रुत्वा अपि मन्दबुद्धिः अजयः स्वकीयां मूर्खतां न ज्ञातवान्। कथाज्ञानेन एव आत्मानं शास्त्रज्ञं मन्यते अजयः। एतादृशः महता प्रयत्नेन शास्त्रं पाठितः चेदपि तत् तस्य अहङ्काराय केवलं भवेत्। राजपुत्रस्य अहङ्कारः लोकस्य पीडकः भवति। एतत् सर्वं विचिन्त्य विद्यानन्दः अजयं विद्यार्थम् अनर्हं मन्यमानः तं गुरुकुलात् प्रेषितवान्। यदि विद्यानन्दः इच्छेत् तर्हि अजयम् अपि शास्त्रज्ञं कुर्यात्। किन्तु अपात्रे दानेन किं प्रयोजनम्? विजयः तु राजभवने यत् अधीतं तदेव श्रेष्ठम् इति पूर्वं मन्यते स्म। गुरुकुलं प्रति आगत्य विवेकं प्राप्तवान् सः। आत्मनः दोषं निस्सङ्कोचम् अङ्गीकृत्य सन्मार्गे गमनार्थं प्रयत्नम् आरब्धवान्। विजयः वस्तुतः विद्यादानार्थं योग्यं पात्रम्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः यथापूर्वम् अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# धेनूनां विभागः

धर्मेन्द्रो नाम वृद्धः धनिकः पूर्वं कस्मिंश्चित् ग्रामे निवसति स्म। सः स्वमरणसमये पुत्रौ शिवरामं नारायणं च आहूय उक्तवान्– "मम मरणकालः तु सन्निहितः। मम मरणानन्तरं सम्पत्तिं विना विवादं समरूपेण विभज्य स्वीकृत्य सुखेन जीवनं कुरुताम्" इति।

एतनन्तरदिने एव धर्मेन्द्रः दिवङ्गतः। पितुः सूचनां पालयन्तौ पुत्रौ सम्पत्तौ समभागं कृतवन्तौ। किन्तु धेनवः त्रयोदश आसन् इति कारणतः तासां विभागे समस्या आगता।

वीणापाणिः नाम ब्राह्मणः एतां समस्यां श्रुतवान्। सः तयोः समीपम् आगत्य उक्तवान्– "पितुः उत्तरक्रियासन्दर्भे गोदानम् अवश्यं करणीयम्। मम गृहे एका धेनुः अस्ति। तया दीयमानं क्षीरम् अस्माकम् अपर्याप्तम्। एका धेनुः दानरूपेण दत्ता चेत् भवतोः पितुः आत्मा अपि तृप्तः भवेत्" इति।

तदा नारायणः शिवरामश्च उक्तवन्तौ– "एतादृशे दाने आवयोः विश्वासः नास्ति। भवान् अपि दान-दक्षिणादिविषये चिन्तनं परित्यज्य श्रमेण जीवतु" इति।

तदा वीणापाणिः उक्तवान्– "दानदक्षिणादीनां स्वीकारः उचितः वा न वा इति तु भिन्नः विषयः। किन्तु भवादृशाः यत्र निवसन्ति तत्र दानदक्षिणादीनां स्वीकारेण केवलेन जीवननिर्वहणं सर्वथा असाध्यम्। अतः अहं बुद्धिमत्तया समस्यानां परिहारम् अपि वदामि। प्रतिफलं दातुं भवन्तौ सिद्धौ चेत् भवतोः धेनुविभागसमस्यायाः परिहारं वक्तुं सिद्धः अहम्" इति।

"प्रतिफलरूपेण किम् इच्छति भवान्?" इति पृष्टवन्तौ तौ सहोदरौ।

"एका धेनुः दातव्या" इति सूचितवान्

वीणापाणिः।

"एका धेनुः दत्ता चेत् द्वादश शिष्यन्ते। तदा विभागे समस्या एव न भवति। अत्र भवतः बुद्धिमत्तायाः कः अवकाशः?" इति पृष्टवान् नारायणः।

"विभागात् पूर्वं धेनुदानस्य प्रश्नः एव नास्ति। तथा समस्या परिहृता चेत् प्रतिफलं दातुं सिद्धौ वा भवन्तौ?" इति पृष्टवान् वीणापाणिः।

"अस्तु तावत्, प्रथमं विभागः भवतु। समरूपेण विभागः स्यात्। प्रतिफलदानस्य अनन्तरम् अपि आवयोः समीपे समसङ्ख्यया धेनवः स्युः" इति उक्तवन्तौ तौ सहोदरौ।

"अस्तु। प्रथमं तात्कालिकतया मम धेनुं भवतोः धेनूनां गणे योजयताम्। आहत्य चतुर्दश धेनवः अभवन्। एकैकः सप्त धेनूः स्वीकरोतु। इदानीं वदताम्– विभागः समरूपेण अभवत् वा न वा इति" इति उक्तवान् वीणापाणिः।

"प्रतिफलरूपेण एका धेनुः भवते दत्ता चेत् आवयोः भागे विषमता भवति एव खलु?" इति उक्तवान् शिवरामः।

"तत् कथम्? एका धेनुः दत्ता चेत् एकैकस्य भागे षट् धेनवः भवन्ति। अतः प्रतिफलदानानन्तरम् अपि समसङ्ख्या एव भवति" इति उक्तवान् वीणापाणिः।

"एवं तर्हि भवतः धेनुः?" इति पृष्टवान् नारायणः।

"मम धेनुः मदीया एव। विभागसमये तात्कालिकतया योजिता आसीत्। विभागः समाप्तः खलु? अतः ताम् अहं नयामि" इति उक्तवान् वीणापाणिः।

एतत् श्रुत्वा शिवरामः नारायणश्च हसन्तौ एकां धेनुं दत्त्वा वीणापाणिम् उक्तवन्तौ– "विभागस्य प्रतिफलरूपेण एषा धेनुः न दीयते, अपि तु भवतः वाक्चातुर्यस्य बुद्धिमत्तायाः च निमित्तं दीयते" इति।

"यस्य कस्यापि निमित्तं वा भवतु। धेनुः तु प्राप्ता मया" इति वदन् धेन्वा सह सन्तोषेण स्वगृहं गतवान् वीणापाणिः।



# चन्दमामानुबन्धः– ५

# ज्ञानभाण्डागारम्

## एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्–



## दारा शुकोह्

शाहजहान्चक्रवर्ति-मुम्ताझ्महल् इत्येतयोः ज्येष्ठः पुत्रः दारा शुकोह् १६१५ तमे वर्षे मार्च् २० दिनाङ्के जातः। सः पितुः अत्यन्तं प्रीतिपात्रम् आसीत्। तथैव तत्कालीनेषु श्रेष्ठपण्डितेषु अन्यतमश्चापि आसीत्। सत्यविषये कस्यापि मतस्य एकस्वाम्यं नास्ति इति सः भावयति स्म। सः महत्या आसक्त्या हिन्दूधर्मतत्त्वानि अधीतवान्। भगवद्गीताम् अन्याः काश्चन उपनिषदः च पार्शियन् भाषया अनूदितवान्।

१६५७ तमे वर्षे शाहजहान् व्याधिग्रस्तः जातः। तत्समये दारा शुकोह् पित्रा सह स्थितवान्। पितुः मरणानन्तरम् एषः एव सिंहासनस्य उत्तराधिकारी भविष्यति इति निरीक्षा आसीत्। किन्तु शाहजहानस्य कनिष्ठपुत्रः औरङ्गजेब् एतस्य विरोधितया युद्धं कर्तुं स्वकीयौ सहोदरौ प्रेरितवान्। दारा शुकोह् सरलः प्रामाणिकश्च। सः एतत्सन्दर्भे तादृशैः अपि वञ्चितः अभवत्, ये च एतेन बहुधा उपकृताः आसन्। सहोदराणां शत्रुभिः सः बहुधा पराजितः अभवत्। सः पर्शियादेशं त्यक्तुं निश्चितवान्। पर्शियादेशात् निर्गतः एषः मलिक् जीवन् खान् नामकस्य आश्रये किञ्चित्कालं स्थितवान्। जीवन् खानस्य प्राणाः पूर्वं कदाचित् दारामहोदयेन एव रक्षिताः आसन्। विश्वासद्रोही सः दारा शुकोहम् औरङ्गजेबपक्षीयानां वशे अर्पितवान्। औरङ्गजेब् दारा शुकोहं धर्मगुरूणां वशं कृतवान्। धर्मगुरवः तम् अधार्मिकम् उक्त्वा तस्य मरणदण्डनम् आदिष्टवन्तः। १६५९ तमे वर्षे अगस्ट् ३० दिनाङ्के तस्य शिरच्छेदः अभवत्।

## सः कः स्यात्?

कश्चन पण्डितः बहूनि वर्षाणि यावत् सञ्चारं कृत्वा स्वकीयं नगरं प्रतिष्ठानं प्रत्यागतवान्। सः शतशः कथाः सङ्गृहीतवान् आसीत्। सः स्वस्य आश्रयदातुः राज्ञः सम्मुखे ताः पठितुम् इच्छति स्म। किन्तु राजा तासां कथानां श्रवणे तावतीम् आसक्तिं न प्रदर्शितवान्। एतेन खिन्नः पण्डितः राजास्थानतः निर्गत्य एकान्ते प्रदेशे कथासहितानि हस्तलेखपत्राणि अग्नौ आहुतिरूपेण समर्पयितुम् आरब्धवान्। राजा एतत् श्रुत्वा सम्भ्रान्तः सन् तं तस्मात् प्रयत्नात् निवारयितुं धावन् आगतवान्। किन्तु तावता एव सप्तसु अध्यायेषु ताडपत्रे लिखितानां कथानां षड् अध्यायाः अग्निना दग्धाः आसन्। सप्तमः भागः केवलं रक्षितः। मूलतः कयाचित् भाषया लिखितः सः ग्रन्थः इदानीं न उपलभ्यते। अनन्तरकाले साकृतिः संस्कृतेन अनूदिता।

वदन्तु, सः पण्डितः कः स्यात्?

(उत्तरम् अष्टमे पृष्ठे)

# विज्ञानविनोदः



**विधानम् –**

अयोडिन्द्रवस्य कांश्चन बिन्दून् मण्डस्य उपरि पातयन्तु। तदा मण्डः जम्बीरवर्णं नीलवर्णं वा प्राप्नोति इति अंशं जानन्ति भवन्तः। पिष्टांशस्य (Starch) परीक्षार्थं परिणामकारी मार्गः एषः। इदानीम् अयोडिन्बिन्दून् आलुकखण्डानाम् उपरि, ब्रेड् उपरि, इतरेषाम् आहारपदार्थानाम् उपरि च पातयन्तु। एतेषु किं किं वस्तु पिष्टांशयुतम् इति वक्तुम् अर्हन्ति वा? आलुकसदृशानि आहारवस्तूनि आर्द्राणि चेत् यावत् तानि शुष्काणि न भवन्ति तावत् प्रतीक्षा करणीया भवेत्। एतदनन्तरम् आयोडिन्द्रवं टिप्पणीपुस्तकस्य कागदस्य उपरि, दिनपत्रिकायाः उपरि, पारदर्शकप्रायस्य कागदस्य (Ditto Paper) उपरि, साप्ताहिकपत्रिकायाः उपरि, मसृणपत्रस्य (Glossy Paper) उपरि च पातयित्वा परिणामं परिशीलयन्तु।

# पिष्टांशपरीक्षा




**कः परिणामः? किमर्थम्?**

आलुकं, पिष्टनिर्मितं ब्रेड्सदृशं वस्तु, टिप्पणीपुस्तकस्य कागदं, पारदर्शकप्रायं कागदं च पिष्टांशयुक्ततां सूचयन्ति। दिनपत्रिकाकागदं, मसृणकागदं च पिष्टांशराहित्यं सूचयन्ति। दिनपत्रिकापत्रे बिन्दुपूरकं किमपि उपयुक्तं न भवति। (अतः एव तस्य रूक्षता।) मसृणपत्रे बिन्दुपूकरकरूपेण पङ्कः उपयुज्यते। परीक्षया यथा भवद्भिः ज्ञातं, टिप्पणीपुस्तकस्य कागदं पारदर्शकप्रायं कागदं च बिन्दुपूरकेण मण्डेन युक्तं भवति।

केषाञ्चित् आहारपदार्थानां स्वरूपम् आघ्राणेन आस्वादेन वा कदाचित् ज्ञायते। पिष्टांशः एवं ज्ञातुं शक्यते किम्? कुतो वा न शक्येत? धान्यस्थं पिष्टांशम् आघ्राय आस्वाद्य च अभिजानन्तु तावत्।

जीर्णीभवनात् पूर्वं पिष्टांशः शर्करारूपं प्राप्नोति। जीर्णकारिका लाला अत्र साहाय्यिका भवति। अतः एव व्यक्तेः मुखे स्थापितः पिष्टांशयुतः आहारः किञ्चित्कालानन्तरं शर्करारूपं प्राप्नोति। ब्रेड्खण्डः तत्सदृशम् अन्यत् वस्तु वा मुखे स्थापितं चेत् केषाञ्चित् निमेषाणाम् अनन्तरं मधुररुचिं व्यञ्जयति। एवम् अनुभूयते वा भवद्भिः?शर्करायुक्ताः पदार्थाः दन्तनाशने हेतवः इत्येतत् प्रायः भवद्भिः ज्ञायते एव। अतः पिष्टांशपरीक्षानन्तरं मुखक्षालनं मां विस्मरन्तु।





# डयानामन्दिरम्

एशिया मिनार्प्रदेशस्य पश्चिमतीरे समृद्धम् एफेसस्नगरम् अस्ति। एतस्य नगरस्य मध्यभागे विभूतिमान् देवालयः अस्ति इत्यतः एतत् नगरं प्रसिद्धं जातम्। स च देवालयः डयानादेवतायाः। (ग्रीक् देशे सा अर्थेमिस् इति प्रसिद्धा।) एवं हि श्रूयते यत् एतस्य देवालयस्य पूर्णनिर्माणार्थम् एफसस्नगरस्य जनैः २२० वर्षाणि यावत् परिश्रमः कृतः इति। दौर्भाग्यवशात् रोमन्चक्रवर्ती नीरो एतं देवालयं लुण्ठितवान्। अनन्तरं क्रि.श. २६२ तमे वर्षे गोथ्जनाः एतं देवालयम् उन्मूलितवन्तः।

# अपूर्वाः ऐतिहासिकघटनाः

## अलेक्साण्डरस्य

मेकेडन्राजस्य पिलिप्महोदयस्य पुत्रः अलेक्साण्डर्। वस्तुतः अपि एषः देवेषु अन्यतमस्य पुत्रः इति विश्वस्यते स्म। 'अन्येन साधयितुम् असाध्यस्य साधनार्थम् एव अहं दैवेन नियुक्तः अस्मि' इति बाल्यतः एव विश्वसिति स्म अलेक्साण्डर्।

तस्य पितुः अपि विचारः आसीत् यत् मम पुत्रः विलक्षणः इति। यतः अलेक्साण्डरस्य जन्मनः अनन्तरं राज्ञा तेन युद्धे अपूर्वः विजयः सम्पादितः आसीत्।

सौभाग्यवशात् अलेक्साण्डर् 'अद्वितीयः शिक्षकः' इति ख्यातस्य अरिस्टाटल्वर्यस्य सकाशात् विद्यां गृहीतवान्। अलेक्साण्डर् एतद्विषये वदति– "मम पित्रा जीवनम् अनुगृहीतम्। गुरुणा अरिस्टाटलेन तु सार्थकं जीवनं शिक्षितम्" इति।

अरिस्टाटल् एव अलेक्साण्डरं विश्वविजेतारं कृतवान् इति वक्तुं यद्यपि कष्टं स्यात्, तथापि सः तदीयं चेतनं विजयार्थं प्रेरितवान् इति तु सत्यम् एव। अलेक्साण्डर् आक्रमणैः तत् चेतनं तर्पितवान्।

एषा क्रि.पू. ४ शतके प्रवृत्ता घटना। तत्समये पर्शिया प्रबलं राष्ट्रम् आसीत्। तं देशं श्रेष्ठः राजा दरियस् पालयन् आसीत्। अलेक्साण्डर् तं पराजितवान्। एतेन विजयेन प्राप्तोत्साहः सः बहूनां देशानां प्रवेशार्थं स्वसेनायै अनुमतिं दत्तवान्। एकैकशः विजयं सम्पादयन् सः अन्ते क्रि.पू. ३२६ तमे वर्षे भारतस्य प्रवेशं कृतवान्।

अत्र या नागरिकता दृष्टा तादृशी सुपरिष्कृता नागरिकता इतः पूर्वं तेन न दृष्टा



# गर्वस्य आघातः



आसीत्। सर्वप्रथमं सः तक्षिलाराजेन सह युद्धं कर्तुम् उद्युक्तः जातः। किन्तु तक्षिलाराजः एतं महता सौजन्येन स्वागतीकृतवान्। एतेन अलेक्साण्डर् नितरां प्रभावितः। अलेक्साण्डर्निमित्तम् आयोजिते सत्कारकूटे बहवः राजानः भागं गृहीतवन्तः। किन्तु एकः तु भागं न गृहीतवान्। तस्य नाम पुरुः इति। सः झेलम्नद्याः अपरस्मिन् पार्श्वे स्थितं राज्यं परिपायति स्म। सः अलेक्साण्डरं युद्धार्थम् आहूतवान्।

चण्डमारुतयुतायां रात्रौ अनिरीक्षितरूपेण अलेक्साण्डरस्य सेना नदीम् अतिक्रान्तवती। पुरुः झटिति स्वसेनां सज्जीकृत्य धैर्येण आक्रामकं सम्मुखीकृतवान्। घोरं युद्धं प्रवृत्तम्। अन्तिमस्य स्वसैनिकस्य मरणपर्यन्तम् अपि पुरुः युद्धं कृतवान्। एतादृशं रणस्थैर्यं दृष्ट्वा अलेक्साण्डर् तु नितराम् आश्चर्यचकितः। अन्ते रक्तसिक्तः बद्धः पुरुः तस्य सम्मुखम् आनीतः। "भवद्विषये कथं व्यवहरणीयम् इति चिन्तयति भवान्?" इति पृष्टवान् अलेक्साण्डर्।

"अये अलेक्साण्डर्वर्य! राज्ञः कस्यचित् विषये यथा व्यवहरति तथैव मद्विषये अपि व्यवहरतु" इति उक्तवान् पुरुः।

"इतोऽप्यधिकम्....?" इति पृष्टवान् अलेक्साण्डर्।

"मया यत् उक्तं तत्र सर्वम् अन्तर्भूतम् अस्ति" इति उत्तरं दत्तवान् पुरुः।

सन्तुष्टः अलेक्साण्डर् पुरु बन्धविमुक्तं कृतवान्। तौ आत्मीयौ सञ्जातौ।

## भारतीये इतिहासे कटाक्षपातः



१. कश्चन तरुणः भारतीयः अलेक्साण्डर्चक्रवर्तिनं शौर्ययुतेन भाषणेन कोपितवान्। सः कः?

२. सः तरुणः कस्मिन् वंशे जातः आसीत्?

३. तस्य उपदेष्टा मन्त्री च कः?

४. तेन (मन्त्रिणा) लिखितः श्रेष्ठः ग्रन्थः कः?

५. तस्य ग्रन्थस्य वैशिष्ट्यं किम्?

६. कनिष्कम् आश्रित्य स्थितः श्रेष्ठः चिकित्सकः कः?

७. तेन चिकित्सकेन लिखितस्य ग्रन्थस्य नाम किम्?

८. कलकत्तानगरं कः निर्मितवान्?

९. तस्या नगरस्य आरम्भः कस्मिन् दिनाङ्के जातः?

१०. कलकत्तानगरस्य प्राचीनतमा संस्था का?

(उत्तराणि अष्टमे पृष्ठे)

## परीक्षन्ताम् आत्मनः सामान्यज्ञानम्

१. सद्योजातस्य काङ्गरूशिशोः आकारः कः भवति?

२. स्वकीये चतुर्थे वयसि एव कः सङ्गीतनाटकं विरचितवान्, यच्च अतीव यशस्वि जातम्?

३. पिपीलिका कियन्तं भारम् उन्नेतुं शक्नोति?

४. 'ओराङ्ग् उताङ्ग्' इत्यस्य कः अर्थः?

५. प्रपञ्चे शुष्कतमः प्रदेशः कः?

६. सूर्यस्य परिमाणं यावत् अस्ति, तावति परिमाणे कति भूमयः स्थापयितुं शक्यन्ते?

७. अतिभारभूता इति परिगण्यमाना उल्का भूमेः उपरि कुत्र पतिता आसीत्?

८. मानवस्य उभयोः मूत्रकोषयोः अन्तः स्थितायाः नलिकायाः दैर्घ्यं कियत् भवेत्?

९. वृष्टिजले किमपि जीवसत्त्वं (Vitamin) भवति किम्?

१०. येसुक्रिस्तस्य जन्मतः आरभ्य एव डिसेम्बर्मासे २५ दिनाङ्के क्रिसमस् आचर्यमाणम् अस्ति किम्?

(उत्तराणि अष्टमे पृष्ठे)




१. सर्जनात्मकसाहित्यार्थं दीयमानः भारतीयः राष्ट्रियपुरस्कारः कः?

२. या एतं पुरस्कारं ददाति तस्याः संस्थायाः नाम किम्?

३. तस्याः संस्थायाः सोदरसंस्थाद्वयं किम्?

४. भारतस्य कः प्रधानमन्त्री सुप्रसिद्धः लेखकः आसीत्?

५. तदीयाः तिस्रः प्रसिद्धाः कृतयः काः?

६. रवीन्द्रनाथठाकूरमहोदयः कदा साहित्यनिमित्तं नोबल्पारितोषिकं प्राप्तवान्?

७. तदीयायाः कस्याः कृतेः निमित्तं तत् नोबल्पारितोषिकं दत्तम्?

८. कः पोर्चुगीस्-भारतीयः युवकः कविः आंग्लभाषया मधुराणि गीतानि रचितवान्?

९. श्रेष्ठेन राष्ट्रियनायकेन लोकमान्यतिलकमहोदयेन लिखितं प्रसिद्धं पुस्तकं किम्?

(उत्तराणि अष्टमे पृष्ठे).

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

"हृदयम्"

**अस्सामी**-हृदय, **बेंगाली**-हृदय, **इंग्लीष्**-हार्ट्, **गुजराती**-हृदय/हेयुन्, **हिन्दी**–हृदय/दिल्, **कन्नड**-हृदय, **काश्मीरी**-दिल, **मलयालम्**-हृदयम्, **मराठी**-हृदय, **ओरिया**-हृदया, **पञ्जाबी**-हिरादा/दिल्, **सिन्धि**-दिलि/हियन्, **तमिळ**-इदयम्, **तेलुगु**-गुण्डे, **उर्दु**-दिल/जमीर

# किं भवान् विश्वसिति?

* यत् अल्पायुष्कयोः मातापित्रोः अपत्यम् अपि अल्पायुष्कं भवति इति?
* यत् पयोहिमं (Ice-cream) शीतलं परिणामं जनयति इति?
* यत् स्वप्नाः वर्णमयाः भवितुं न अर्हन्ति इति?

# न तथा

* संशोधनेन ज्ञायते यत् जीवितकालविषये मातापित्रोः अपत्यस्य च विशेषसम्बन्धः कोऽपि नास्ति इति।
* ऐसक्रीम् तापजनकैः (Calories) युक्तं भवतिः, अतः तस्य अन्तिमः परिणामः तु तापोत्पादनम् एव।
* स्वप्नाः वर्णमयाः अपि भवन्ति कदाचित्।

# उत्तराणि

## सः कः स्यात्?

गुणाढ्यः। सः बृहत्कथायाः लेखकः। बृहत्कथा अनन्तरकाले सोमदेवेन संस्कृतेन अनूदिता, या च कथासरित्सागरनाम्ना प्रसिद्धा।

## इतिहासः

१. चन्द्रगुप्तः।
२. मौर्यवंशे।
३. कौटिल्यः। चाणक्यः इति तस्य अपरं नाम।
४. अर्थशास्त्रम्।
५. समाजविज्ञानविषये राज्यशास्त्र-विषये व्यवस्थितरूपेण लिखितः जगति एव आदिमः ग्रन्थः।
६. चरकः।
७. चरकसंहिता।
८. जॉब् चर्नाक्।
९. २४-८-१६९० तमे दिनाङ्के।
१०. कालीघाट्प्रदेशे स्थितं कालीमातुः मन्दिरम्।

## सामान्यज्ञानम्

१. ३/४ अङ्गुल दीर्घः। किन्तु पूर्णवर्धनं यावत् न भवति तावत् सः मातुः उपजठरे (Pouch) एव तिष्ठति।
२. मोझार्ट्। तस्य सङ्गीतनाटकस्य नाम 'मिट्रिडिटीस्' इति।
३. स्वस्य भारस्य ५० गुणितं भारम्।
४. 'अरण्यस्य प्राचीनः पुरुषः' इति।
५. चिलीदेशस्थः 'कलमे' नामकः प्रदेशः। अत्र इतः पूर्वं कदापि वृष्टिः न जाता इति भाव्यते।
६. दशलक्षाधिकाः भूमयः।
७. आफ्रिकादेशे। एतस्याः भारः षष्टिटन् स्यात्। 'होबा वेस्ट्र उल्कापातः' इति एतस्य नाम।
८. ४० मैल् भवेत्।
९. आम्, 'बि' जीवसत्त्वं भवति।
१०. न। क्रि.श. ४४० तः केवलम्।

## साहित्यम्

१. साहित्य-अकाडमीपुरस्कारः।
२. 'साहित्य अकाडमी' इति।
३. सङ्गीत-नाटक-अकाडमी, ललित-कला-अकाडमी च।
४. जवाहरलाल नेहरू।
५. i) डिक्सवरी आफ् इण्डिया।
ii) ग्लिंप्सस् आफ् वर्ल्ड् हिस्टरी।
iii) एन् अटोबयाग्रफी।
६. १९१३ तमे वर्षे।
७. 'गीताञ्जली' निमित्तम्।
८. हेन्रि डेरोझियो।
९. गीतारहस्यम्।

# नेहरूकथा – १



अष्टादशे शतके मोगलूचक्रवर्ती फरुक् षैय्यद् काश्मीरं गतः राजकोलनामकं ब्राह्मणं दृष्टवान्, तस्य पाण्डित्येन आकृष्टः अभवत् च। तस्य चक्रवर्तिनः आग्रहेण राजकोलकुटुम्बं काश्मीरतः देहलीनगरम् आगच्छत्। देहलीनगरे कस्याश्चित् कुल्यायाः (नहर्) पार्श्वे तस्य कुटुम्बस्य वासः आसीत्। अतः तत्कुटुम्बीयाः 'नेहरू' इति उपनाम्ना ख्यात । तत्कुटुम्बीयः गङ्गाधरनेहरू, १८५७ तम वर्षे प्रवृत्तात् प्रथमस्वातन्त्र्यसङ्ग्रामात् पूर्वं देहलीनगरस्य से ।ध्यक्षः आसीत्। एतस्मिन् सङ्ग्रामे नेहरूकुटुम्बस्य सर्वस्वं नष्टम्। अतः गङ्गाधरनेहरू सकुटुम्बम् अग्रानगरं गतवान्। १८६१ तमे वत्सरे सः दिवङ्गतः। ततः मासत्रयानन्तरं तस्य पुत्रः मोतीलालनेहरू जातः। मोतीलालं तदीयः अग्रजः एव पोषितवान्।



मोतीलालः न्यायशास्त्रं पठित्वा न्यायवादी सञ्जातः। तेषु एव दिनेषु अलहाबादनगरे उच्चन्यायालयः स्थापितः। तत्र एषः न्यायवादिवृत्तिम् आरब्धवान्। अल्पे एव काले धनं सम्पाद्य धनिकः जातः। अग्रजस्य मरणानन्तरं स्वस्य अग्रजस्य च कुटुम्बं समर्थतया पोषितवान् मोतीलालः।

मोतीलालस्य अद्वितीयः पुत्रः जवाहरलालः १८८९ तमे वर्षे नवम्बर् १४ दिनाङ्के जातः। पिता मोतीलालः आदिनं कार्यं कुर्वन् सायं मित्रैः सह उपविश्य विनोदवार्तालापेन समयं यापयति स्म। तत्समये बालकः जवाहरलालः रहस्यरूपेण ज्येष्ठानां व्यवहारं पश्यन् तम् अवगन्तुं प्रयतते स्म।





एकदा मोतीलालः रक्तवर्णीयं मद्यं पिबन् आसीत्। तत् दृष्ट्वा आश्चर्यचकितः बालकः जवाहरः मातुः समीपं धावन् गत्वा उक्तवान्– "अम्ब! पिता रक्तं पिबति" इति। पुत्रस्य आश्चर्यं मुग्धतां च दृष्ट्वा माता स्वरूपराणी मनसा हसितवती।

प्रायः मोतीलालः सदा उदारतया एव व्यवहरति। किन्तु कोपः आगतः चेत् सः अतीव कठोरः भवति। एकदा बालकः जवाहरः पितुः उत्पीठिकायां स्थितं लेखनीद्वयं दृष्टवान्। पिता सकृत् लेखनीद्वयेन न लिखति इति आलोच्य सः ततः एकां लेखनीं स्वीकृतवान्। एतत् ज्ञात्वा क्रुद्धः मोतीलालः पुत्रं वेत्रदण्डेन सम्यक् ताडितवान्।





पित्रा ताडितः अपि जवाहरः पितुः विषये दुरभिप्रायं कमपि न प्राप्तवान्। 'पितुः लेखनी यत् स्वीकृता तत् दोषाय। अतः सः मां ताडितवान्' इति समाधानं प्राप्तवान् सः। जवाहरलालं माता स्वरूपराणी महत्या प्रीत्या अनुरागेण च पश्यति। सा सदा पुत्रं महाभारतस्य रामायणस्य च कथां श्रावयति स्म।

जवाहरलालस्य जन्मदिनं प्रतिवर्षम् अपि सवैभवम् आचर्यते स्म। नूतनानि वस्त्राणि धृतवन्तं तं तुलायाः एकस्मिन् घटे उपवेश्य अन्यस्मिन् घटे गोधूमधान्यं शाकं च स्थापयित्वा तुलाभारं कुर्वन्ति स्म। तथा स्थापितं धान्यं शाकं च निर्धनेभ्यः दीयते स्म। एतत् दृष्ट्वा जवाहरः चिन्तयति स्म यत् एतादृशः जन्मदिनोत्सवः वर्षे एकवारम् एव कुतः आगच्छति इति।





कश्चित् सैनिकः जवाहरस्य मित्रम्। तस्य साहाय्येन एषः अश्वप्रयाणम् अभ्यस्तवान्। कदाचित् एकाकी अश्वारोहणं कृत्वा गच्छन् सः प्रमादवशात् पतितवान्। बालकं विना अश्वः केवलं गृहं प्रत्यागच्छत्।

तस्मिन् समये मोतीलालः मित्रयोः भोजनसत्कारे निमग्नः आसीत्। जवाहरं विनैव प्रत्यागतम् अश्वं दृष्ट्वा सर्वे उद्विग्नाः जाताः। तस्य अन्वेषणार्थम् एकैकः एकैकस्यां दिशि धावितवान्।





अत्रान्तरे जवाहरः सकुशलं गृहं प्रत्यागतवान्। तस्य प्रत्यागमनं दृष्टवतां सर्वेषाम् अपरिमितः सन्तोषः। प्रौढावस्थायां कदाचित् जवाहरः एतं प्रसङ्गं स्मरन् उक्तवान्— "तद्दिने महत् साहसकार्यं कृत्वा प्रत्यागतवन्तम् इव मां सर्वे परमादरेण दृष्टवन्तः" इति।

—(अनुवर्तते)



# कलाभिरुचिः

विदर्भदेशं विचित्रसेनः नाम राजा पालयन् आसीत्। तस्य स्वभावः अतीव विचित्रः। मनसि यत् स्फुरति तत् अविलम्बेन कार्यान्वितं भवेत् एव। मनसि आगतस्य विचारस्य युक्तायुक्ततां न चिन्तयति सः।

एकदा राजा स्वेच्छया वर्णान् योजयित्वा मनोविनोदार्थं कूर्चेन चित्रलेखनार्थं प्रयतमानः आसीत्। तस्मिन् समये उपसेनापतिः स्वकार्यसाधनार्थं तस्य समीपम् आगतवान्। महाराजं तोषयितुम् इच्छन् सः– "महाप्रभो! चित्रकलायाम् अभिरुचिः अस्ति भवतः इति अहं जानामि स्म। किन्तु एतावत् नैपुण्यं स्यात् इति न तर्कितम् आसीत्। एषा प्रतिभा राजभवनमात्रसीमिता न स्यात्। समग्रः लोकः भवतः कलानैपुण्यं जानीयात्। एतदर्थं किमपि करणीयम्" इति प्रशंसावचनानि उक्तवान्।

एतया स्तुत्या सन्तुष्टः राजा विचित्रसेनः उक्तवान्– "ये दैनन्दिनजीवनविषये निश्चिन्ताः, तेषाम् एव कलया प्रयोजनम्। सामान्याः जनाः कलया किं प्राप्नुयुः? भवतः वचनम् अव्यावहारिकम् इति मम अभिप्रायः" इति।

"तथा न महाप्रभो! कलायाः चरमं लक्ष्यं खलु आत्मानन्दः? तम् आत्मानन्दं प्राप्तुं कः अनर्हः स्यात्? सामान्यस्य तु धनादिसामर्थ्यं न भवति इत्यतः सः कलाविषये अनासक्तिं प्रदर्शयति। वस्तुतः तु कला तस्यापि हस्तलभ्या यदि स्यात् तर्हि सः अपि आदरवान् भवेत् एव। अतः भवतः कलानैपुण्यस्य परिचयं सामान्याः अपि यथा प्राप्नुयुः तथा कर्तुं भवदीयस्य चित्रस्य प्रतिकृतयः सहस्रशः कारणीयाः। अल्पमूल्येन कृतिः लभ्या स्यात्। तदा भवतः विषये जनानाम् आदरः वर्धते,



तथैव कलायाः अपि उज्जीवनं भविष्यति'' इति उक्तवान् उपसेनापतिः।

एवम् उक्त्वा महाराजतः स्वकीयं स्वार्थकार्यं साधयित्वा निर्गतवान् उपसेनापतिः। किन्तु तेन उक्तः विचारः महाराजस्य मनसि सदा आवर्तते।

''कलाकृतिप्रसारविषये मार्गं सूचयतु'' इति मन्त्रिणं माधवं सूचितवान् राजा।

तदा मन्त्री माधवः दिग्भ्रान्तः सन् चिन्तापूर्णेन स्वरेण उक्तवान्– ''प्रभो! कलाकृतयः सामान्यैः अपि यथा प्राप्येरन् तथा कर्तुं लक्षशः सुवर्णानि व्ययीकरणीयानि भवन्ति। तावता व्ययेन तत् कृतं चेदपि सामान्याः तेन किं प्रयोजनं प्राप्नुयुः इति तु न ज्ञायते। एषा योजना स्वीकृता चेत् अन्ये अभिवृद्धिपराः कार्यक्रमाः कुण्ठिताः भवेयुः इति मम भीतिः। इतोऽपि अधिकं वक्तुम् अहं न शक्नोमि। श्रुत्वा राजा प्रमाणम्'' इति।

मन्त्रिणः सूचना विचित्रसेनाय न अरोचत। सः द्वित्रेषु दिनेषु अनेकान् कलाकारान् आनायितवान्। तेषां द्वारा उत्तमेषु काष्ठफलकेषु राज्ञा चित्रितायाः कृतेः प्रतिकृतयः सहस्रशः कारिताः। धनं जलम् इव व्ययितम्। तासां प्रतिकृतीनां मूल्यम् अत्यल्पं निश्चितवान् राजा। देशे सर्वत्र तासां विक्रयणव्यवस्था अपि कृता।

एतदनन्तरम् एकं वर्षम् अतीतम्। एकदा राजा विचित्रसेनः मन्त्रिणं माधवम् उक्तवान्– ''मन्त्रिवर्य! मम कृतीनां विक्रयणव्यवस्था कृता आसीत् खलु? सामान्येषु जनेषु तस्य कः परिणामः इति अहं ज्ञातुम् इच्छामि। वेषपरिवर्तनं कृत्वा देशे अटनं करवाव, आगच्छतु'' इति।

मन्त्री अपि एतादृशम् एव अवकाशं प्रतीक्षमाणः आसीत्। अतः राज्ञः प्रस्तावं सः सन्तोषेण अङ्गीकृतवान्। अनन्तरं तौ वणिग्वेषेण सञ्चारार्थं प्रस्थितवन्तौ।

मुख्यमार्गे स्थितम् एकं विशालम् आपणं गतवन्तौ तौ। तत्र सर्वविधानि अपि कलात्मकवस्तूनि आसन्। विचित्रसेनेन चित्रितानां चित्राणां विविधाः प्रकाराः अपि एकत्र स्थापिताः आसन्।

तदा कश्चन मध्यवयस्कः आगत्य

आपणिकम् उक्तवान्– "मया एकं गृहं निर्मितम्। तत्र दृष्टिदोषनिवारणार्थम् काचित् आकृतिः स्थापनीया। इतरत्र तस्याः मूल्यम् अधिकम्। भवतः आपणे महाराजेन चित्रितानि चित्राणि लभ्यन्ते इति श्रुतम्। तानि चित्राणि दृष्टिदोषनिवारणार्थं स्थापयितुं योग्यानि इति केनचित् उक्तम्। अतः तादृशम् एकं चित्रम् अपेक्षितं मम" इति।



स्वस्य चित्रस्य विषये तेन मध्यवयस्केन प्रकटितं भावं श्रुत्वा राजा नितरां खिन्नः।

तावता कश्चन चित्रकारः तत्र आगत्य आपणिकम् उक्तवान्– "विचित्रसेनमहाराजेन चित्रितं चित्रद्वयं ददातु" इति।

एवं पृष्टवान् चित्रकारः इति ज्ञातवान् मन्त्री। सः चित्रकारसमीपं गत्वा उक्तवान्– "श्रीमन्! महाराजस्य चित्रद्वयं यत् भवान् क्रीणन् अस्ति तेन महाराजस्य महान् सन्तोषः भविष्यति। प्रायः भवान् चित्रकलापाठनसन्दर्भे विद्यार्थिनां पुरतः आदर्शरूपेण स्थापयितुम् एतत् नयन् अस्ति खलु?" इति।

तत् श्रुत्वा चित्रकारः हसन् उक्तवान्– "कथं न लेखनीयम् इति बोधयितुं प्रत्युदाहरणरूपेण एतस्य उपयोगं करोमि अहम्। सम्भाव्यमानानां दोषाणां आकरः अस्ति एतत् चित्रम्" इति।

एतत् श्रुतवतः महाराजस्य मुखं नितरां म्लानम्। यावत् सः ततः गन्तुम् उद्युक्तः तावता काचित् वृद्धा आगत्य महाराजेन चित्रितानि चत्वारि चित्राणि क्रीतवती।

ततः गन्तुम् उद्युक्तयाः तस्याः समीपं गत्वा मन्त्री उक्तवान्– "भोः मातः, भवती कलाभिमानिनां कुले जाता इति भाति। यतः चत्वारि चित्राणि युगपत् एव क्रीतवती। भवत्याः कलाभिरुचिं पश्यतः मम महान् सन्तोषः जातः" इति।

तदा सङ्कोचेन सा वृद्धा उक्तवती– "आर्य! भवतः प्रशंसायाः अपात्रम् अहम्। कलां लेशतः अपि न जानामि। येषाम् उदरम्भरणे एव क्लेशः ते किं कलाविषये चिन्तयन्ति? एतानि चित्राणि यत्र चित्रितानि तानि काष्ठफलकानि दृढानि अमूल्यानि च। मम तु पुरातनं गृहम्। वातायनस्य कवाटाः

नष्टाः सन्ति। अधिकं धनं दत्त्वा काष्ठफलकं क्रेतुम् अशक्ता अहं खिन्ना आसम्। तदा केनचित् एषः उपायः सूचितः। मूल्यं तु न्यूनम्। दृढता अपि अस्ति। महाराजस्य अनुग्रहात् यथेष्टं लभ्यते अपि। महाराजः चिरं जीवतु'' इति।

तया वृद्धया निर्वञ्चनया स्वाभिप्रायः प्रकटितः आसीत्। एतत् श्रुत्वा मन्त्री महाराजस्य मुखं दृष्टवान्।

एतावता विचित्रसेनेन आत्मनः कलाप्रतिभायाः स्तरः ज्ञातः आसीत्। या व्यवस्था कृता तस्याः परिणामः कः इत्यपि ज्ञातम् अस्ति इदानीम्।

''मन्त्रिवर्य! अटनम् एतावता अलम्। प्रतिगच्छाव तावत्'' इति उक्त्वा राजभवनं प्रत्यागतवान् राजा। तत्र सः निरुत्साहेन मन्त्रिणं पुनः उक्तवान्– ''जनेषु कलाभिरुचिः वर्धताम् इति उद्देशेन मया एषा व्यवस्था कारिता। किन्तु सा सर्वथा निष्फला। मया लिखितानां चित्राणां प्रतिकृतिनिर्माणे नियुक्तान् सर्वान् कलाकारान् अद्यैव गृहं प्रेषयतु। इतः परं तेषां साहाय्यं न अपेक्षितम्'' इति।

तदा मन्त्री विनयेन उक्तवान्– ''प्रभो! भवान् अन्यथा न भावयेत् इति विचिन्त्य अहं किञ्चित् निवेदयामि। जनेषु कलाभिरुचिः जागरणीया इति भवतः उद्देशः योग्यः एव। किन्तु तादृशं कार्यं कर्तुं प्रतिभाशालिनः कलाकाराः कार्यप्रवृत्ताः भवेयुः। तादृशान् कलाकारान् महाराजः भवान् पोषयेत्'' इति।

मन्त्रिणः पथ्यं वचनम् अङ्गीकृतवान् विचित्रसेनः। ये प्रतिभाशालिनः कलाकाराः आसन् तेषां भाग्योदयः जातः। ते देशे सर्वत्र कलाशालाः आरब्धवन्तः। आसक्ताः बहवः तरुणाः एतेन चित्रकलाम् अभ्यस्तवन्तः। देशे सर्वत्र कलाविषये चर्चा प्रवृत्ता। तेन सहजतया सामान्याः अपि कलायाम् अभिरुचिमन्तः जाताः। राजा अपि समर्थस्य कलाकारस्य शिष्यत्वम् अङ्गीकृत्य राजभवने एव कलाकौशलं सम्पादितवान्।





# कृष्णावतारः

देवर्षिः श्रीमान् नारदः अनन्तरदिने प्रचलिष्यमाणस्य विवाहस्य वार्तां कृष्णं निवेद्य गतवान्। एतदनन्तरं कृष्णः प्रश्नार्थकदृष्ट्या सभां दृष्टवान्। सर्वे मौनं स्थितवन्तः आसन्।

तदा कृष्णः तान् उद्दिश्य उक्तवान्– "श्रेयोभिलाषिणा नारदमहामुनिना उक्तं भवन्तः सर्वे श्रुतवन्तः एव खलु? तस्य सूचना अस्माभिः शिरसा धारणीया। अतः वयं सर्वे इदानीम् एव कार्योद्युक्ताः भवेम। कुण्डिनपुरं गत्वा सौभाग्यं सम्पाद्य प्रत्यागच्छेम। भवन्तः सर्वे स्ववाहनं सज्जीकुर्वन्तु। सेना अपि सिद्धा भवतु। सात्यकिः अग्रगामी भवतु। मध्ये बलरामः तिष्ठतु। उग्रसेनमहाराजः अन्ते तिष्ठतु। अहं दारुकेण सह सर्वाणि आयुधानि स्वीकृत्य अग्रे भवामि। शिशुपाल-रुक्मि-जरासन्धादीन् उपायेन वञ्चयित्वा रुक्मिणीम् अपहृत्य आनेष्यामि। अस्माभिः सर्वैः सम्भूय एतत् कार्यं साधनीयम्" इति।

द्वारकायां प्रयाणदुन्दुभेः नादः प्रतिध्वनितः। कृष्णस्य विवाहवार्ता क्षणमात्रेण राजधान्यां प्रसृता। यादववीराः सर्वे उत्साहेन प्रयाणसन्नाहम् आरब्धवन्तः। एतम् उत्साहं दृष्ट्वा तृप्तिं प्रदर्शयन् श्रीकृष्णः आत्मानम् अलङ्कृत्य रथम् आरूढवान्।

'एवं कृष्णः रुक्मिणीं परिणेतुम् इच्छन् यादववीरैः सह सवैभवं प्रस्थितः अस्ति' इति वार्ता कुण्डिनपुरम् अपि आगता। 'कृष्णः कुण्डिनपुरसमीपम् आगतः अस्ति' इति वार्तां श्रुत्वा रुक्मिण्याः पिता भीष्मकः अन्तरङ्गे



सन्तोषम् अनुभूतवान्। सः कृष्णम् आदरेण सत्कृत्य नगरसीमायां स्थिते अतिथिभवने तस्य वसतिम् उपकल्पितवान्।

विवाहनिमित्तम् अन्यान्यराज्येभ्यः समागताः राजानः कृष्णस्य आगमनवार्तां श्रुत्वा परस्परवार्तालापम् आरब्धवन्तः।

"शिशुपालः कृष्णस्य मातुलान्याः पुत्रः खलु? अतः विवाहसमारम्भे कृष्णस्य उपस्थितिः न आश्चर्यकरी। यदि सः न आगतः स्यात् तर्हि एव आश्चर्यम्" इति उक्तवन्तः केचन।

"वस्तुतः सहजभावेन कृष्णः न आगतः इति भाति। तस्य आगमनस्य अन्यः एव उद्देशः स्यात्। स च कः इति प्रत्यक्षं ज्ञातव्यं, तावदेव" इति उक्तवन्तः अन्ये केचन।

एवं केषाञ्चित् भीतिः, पुनः केषाञ्चित् कुतूहलम्, अन्येषां केषाञ्चित् सन्तोषः, अपरेषां केषाञ्चित् दर्शनोत्साहः!

'यादववीरैः सह कृष्णः कुण्डिनपुरे उपस्थितः अस्ति' इत्येतां वार्तां श्रुत्वा रुक्मिणी मेघदर्शनात् नृत्यन्ती मयूरी इव नितरां सन्तुष्टा। एतावत्पर्यन्तं या खेदेन क्लान्ता आसीत् सा इदानीं उत्साहस्य मूर्तिमत्स्वरूपा जाता अस्ति।

कृष्णः एकान्ते उपविश्य चिन्तने निमग्नः– 'रुक्मिणीम् अहं कथं पश्येयम्? तस्याः अपहरणार्थं कः मार्गः आश्रयणीयः? सम्मुखम् आगताः शत्रवः कथं सम्मुखीकरणीयाः? तत्समये रुक्मिण्याः रक्षणं कथम्? वस्तुतः अपि रुक्मिणी मयि नितराम् आसक्ता इत्येतत् सत्यं वा? नारदस्य वचने पूर्णविश्वासः किम् उचितः? रुक्मिण्याः मनः ज्ञात्वा कः वदेत्?' इति।

'अन्याः समस्याः यथाकथमपि भवन्तु नाम। रुक्मिणी मां प्रेम्णा पश्यति चेत् पर्याप्तम्। सा मयि अनुरक्ता इत्येतत् दृढं चेत् सम्मुखम् आगतं देवेन्द्रम् अपि अहम् अविगणय्य अग्रे गच्छेयम्। तस्याः अनुरागः निश्चितः चेत् मम एषः प्रयत्नः अपि सार्थकः एव' इति निश्चितवान् कृष्णः।

प्रभातकिरणाः उदिताः। मधुमक्षिकाः गुञ्जारवं कुर्वत्यः पुष्पाणि अन्वेष्टुं



निर्गतवत्यः। हंसाः आनन्देन सरोवरेषु विहारम् आरब्धवन्तः। सूर्योदयः अपि जातः। कृष्णः प्रातर्विधिं समाप्य आत्मानं सम्यक् अलङ्कृतवान्। 'किञ्चित्कालानन्तरं माम् अनुसृत्य आगच्छन्तु' इति परिवारम् आदिश्य अलङ्कृतं रथम् आरुह्य रुक्मिण्याः अन्वेषणार्थं वसतिगृहतः निर्गतवान्। रुक्मिण्याः दर्शनार्थं तस्य मनः त्वरते।

राजभवने परिचारिकाः सख्यः च रुक्मिणीं वधूरूपेण अलङ्कृतवत्यः। अलङ्करणस्य समाप्तेः अनन्तरं ताः रुक्मिणीं रमणीयायां शिबिकायाम् उपवेशितवत्यः। शिबिकावाहकाः शिबिकाम् उन्नीय नगरसीमायां स्थितं गौरीमन्दिरं प्रति प्रस्थितवन्तः।

रुक्मिणी आलयं प्राप्य शिबिकातः अवतीर्य सखीभिः सह आलयस्य अन्तः गत्वा गौरीदेवीं नमस्कृत्य प्रार्थितवती– "मातः, गोकुलवासी कृष्णः अत्र उपस्थितः इति श्रुतम्। कृष्णः एव मां यथा परिणयेत् तथा वरेण अनुगृहणातु" इति।

प्रार्थनां समाप्य रुक्मिणी मन्दिरतः बहिः आगतवती। तावता कृष्णः तत्र आगतवान्। सः ऐदम्प्राथम्येन तां दृष्टवान्। क्षीरसमुद्रात् आगता लक्ष्मीः इव दृश्यते स्म रुक्मिणी। एतादृशी सौन्दर्यवती लोके स्यात् इति कल्पना अपि न आसीत् कृष्णस्य। तस्याः सौन्दर्यादीनां श्रवणेन एव या आसक्तिः उत्पन्ना आसीत् सा इदानीं पराकाष्ठां प्राप्तवती। तस्य सर्वेषु अङ्गेषु उत्साहः उद्गतः।

रुक्मिण्याः अपहारार्थम् इतोऽपि उत्तमः अवकाशः कदापि न लभ्येत इति आलोचितवान् कृष्णः। एतादृशम् अवकाशं परिकल्पितवतीं देवीं गौरीं मनसा नमस्कृतवान् सः।

रुक्मिणी अपि कृष्णम् ऐदम्प्राथम्येन पश्यन्ती अस्ति। 'एषः एव कृष्णः' इति उक्तवत्यः सख्यः। कृष्णं दृष्टवत्याः तस्याः सर्वाणि अङ्गानि आनन्दरसेन पुलकितानि जातानि। यः मनोमन्दिरे प्रतिष्ठापितः आसीत्, यस्य च ध्यानम् अहोरात्रं क्रियमाणम् आसीत्, सः नीलमेघश्यामः प्रत्यक्षम् उपस्थितः अस्ति इति ज्ञातवत्याः तस्याः



अग्रे आगत्य तेन वृक्षेण सम्मुखम् आगतान् भटान्, रथान्, गजान्, अश्वान् च सम्यक् ताडितवान्। एतेन भटाः इतस्ततः विकीर्णाः जाताः।

एतं कोलाहलं श्रुत्वा उग्रसेनः, सात्यकिः, शतद्युम्नः, विदूरथः, प्रसेनजित्, इत्यादयः, अन्येऽपि यदु-वृष्णि-भोजान्धकवीराः च बलरामस्य समीपम् आगतवन्तः। ते उच्चस्वरेण कृष्णम् उक्तवन्तः– "कृष्ण! अत्रत्यं विचारं भवान् परित्यजतु। विजयवध्वा रुक्मिण्या सह द्वारकां गच्छतु। अत्रत्यान् वीरान् सम्मुखीकृत्य विजयं सम्पाद्य आगच्छामः वयम्" इति।

मुखम् आरक्तं जातम्। आनन्दातिरेकात् सा समाधिस्थितिं प्राप्तवती योगिनी इव नेत्रे निमील्य स्थितवती। आत्मविस्मृतिं प्राप्तवतीं तां दृष्ट्वा सख्यः परिचारिकाश्च किञ्चिदिव भीताः।

अत्रान्तरे बलरामः तत्र आगतवान्। कृष्णः अग्रिमकार्ययोजनां सङ्क्षेपेण अग्रजम् उक्त्वा रुक्मिण्याः समीपं गत्वा बाहुपाशेन ताम् आलिङ्ग्य स्वस्य रथे उपवेशितवान्। सख्यः एतत् दृष्ट्वा हाहाकारं कृतवत्यः।

रुक्मिण्याः सखीनां परिचारिकाणां च हाहाकारं श्रुत्वा अङ्गरक्षकाः जागरूकतां प्राप्तवन्तः। ते आयुधानि उन्नीय कृष्णस्य उपरि आक्रमणं कृतवन्तः।

बलरामः समीपस्थम् एकं वृक्षम् उत्पाट्य

रुक्मिण्याः अङ्गरक्षकेषु सजीवं स्थिताः केचन 'कृष्णेन रुक्मिणी अपहृता' इति वार्तां भीष्मकं, जरासन्धं, शिशुपालम्, इतरान् मुख्यान् राज्ञः च निवेदितवन्तः। एतत् श्रुत्वा ते सर्वे आश्चर्यं क्रोधं च प्रकटयन्तः चर्चाम् आरब्धवन्तः।

"राजाधिराजमहाराजाः एतावन्तः अत्र उपस्थिताः सन्ति। एतत् जानन् अपि कृष्णः किमर्थम् एतादृशं साहसकार्यं कृतवान्? अहो धैर्यम्! अहो औद्धत्यम्! तस्य विनाशकालः निश्चयेन सन्निहितः। अतः एव एतादृशी बुद्धिः" इति उद्गारं प्रकटितवन्तः केचन। अन्ये केचन रोषेण दन्तान् कटकटायितवन्तः।

जरासन्धः तु अपरिमितेन कोपेन ज्वलन्,



नेत्रेण क्रोधाग्निम् उद्वमन्– "गोपकुले जातः कश्चन जगदेकवीरं मां धिक्कृत्य मम प्रयत्नान् विफलीकृतवान् खलु! एतत् कदापि न सम्भवति। महासेनया सह गत्वा इदानीम् एव तम् अहं यमपुरीं प्रेषयिष्यामि। ये इच्छन्ति ते माम् अनुसर्तुम् अर्हन्ति" इति उच्चस्वरेण उक्तवान्।

"कृष्णः समुद्रमध्ये स्थितां द्वारकां वा प्राविशत्। नागैः परिरक्षितं पातालं वा गच्छतु। अहं तस्य आश्रयस्थानं नाशयित्वा, मित्रबान्धवसहितं तं मारयित्वा, रुक्मिणीं प्रत्यानेष्यामि एव" इति प्रतिज्ञां कृतवान् जरासन्धः।

तदा पौण्ड्रकः वासुदेवः जरासन्धं सान्त्वयित्वा– "भृत्ये मयि स्थिते भवतः किमर्थं वृथाश्रमः? अहम् एतत्क्षणे एव इतः निर्गत्य कृष्णं लीलया मारयित्वा तदीयं कलेबरं पशुभ्यः बलिरूपेण समर्प्य प्रत्यागमिष्यामि। भूमौ वासुदेवद्वयस्य स्थितिः सर्वथा अनुचिता। एतत् अनौचित्यं परिहर्तुम् अयं सदवकाशः। मम बाहुबलस्य एषः परीक्षाकालः। स्वामिभक्तिप्रदर्शनार्थं भृत्यस्य मम कश्चन सुवर्णावकाशः। एतस्मिन् सन्दर्भे कृष्णः यमपुरस्य अतिथिः भविष्यति इति तु सुनिश्चितम् एव। युद्धयात्रार्थम् अनुमतिदानेन अनुग्राह्यः अहम्" इति उक्त्वा गर्वेण भुजास्फालनं कृतवान्।

तावता शिशुपालः महत् परिघायुधम् उन्नीय गर्जितवान्– "सर्वे यथास्थानं तिष्ठन्तु। कोऽपि विचलितः मा भवतु। इदानीं यत् प्रवृत्तं तत् वस्तुतः मम अवमाननम्। रुक्मिणी परिणेतव्या इति उत्साहेन आगत्य एवं मुखभङ्गं प्राप्तवान् अस्मि अहम्। एतेन परिघायुधेन केवलेन एव कृष्णं नामावशेषं कृत्वा यादवान् धराशायिनः कृत्वा जरासन्धस्य भृत्यत्वं प्रमाणीकुर्वन् कीर्तिं सम्पादयिष्यामि। अन्यस्मै निश्चितां वधूं किं कोऽपि क्षत्रियः मनसा इच्छेत्? कदापि न। सः यादवकुलकलङ्कः एतादृशम् अनुचितं कार्यं कृतवान्। गोपकुले जातः गोसदृशः एतत् कार्यं युक्तं मन्येत, न अन्यः। तादृशस्य कृष्णस्य मारणं कृत्वा रुक्मिण्याः

प्रत्यानयनेन कोऽपि अधर्मः न भविष्यति" इति।

शिशुपालेन एवम् उक्ते अपि जरासन्धादयः सर्वे प्रमुखाः राजानः कवचादिकं धृत्वा रथम् आरुह्य युद्धार्थं सन्नद्धाः जाताः। अल्पेन एव कालेन सेना अपि सिद्धा जाता। भेरीशङ्खप्रभृतीनि युद्धवाद्यानि वादितानि। सर्वे अट्टहासं कुर्वन्तः कृष्णस्य परिवारम् अनुधावितवन्तः।

रथे रुक्मिणीम् आरोप्य नयन्तं कृष्णं, तम् अनुसृत्य गच्छतः यादववीरान् च दृष्टवन्तः जरासन्धादयः। एतान् दृष्ट्वा यादववीराः गमनं स्थगयित्वा युद्धार्थं सिद्धाः जाताः।

बलरामादयः सन्ति चेदपि यादवसेना आकारेण अल्पा एव। जरासन्धादीनां सैन्यबलं तु अतिमहत्। तथापि युद्धे विशेषहानिः जरासन्धसैन्यस्य एव जाता। उभयोः सैन्ययोः वीराधिवीराः परस्परयुद्धम् आरब्धवन्तः।

शक्रदेवः अक्रूरश्च मिलित्वा दन्तवक्त्रेण सह युद्धम् आरब्धवन्तौ। सात्यकि-जरासन्धयोः महत् बाहुयुद्धं प्रवृत्तम्। शिशुपालः तु त्रिभिः यादववीरैः सह युगपत् एव युद्धं करोति। कृतवर्म-पौण्ड्रकवासुदेवयोः मध्ये घोरं युद्धं दृश्यते।

बलरामः तु कालयमः इव शत्रुनाशनं कृतवान्। जरासन्धः अपि युद्धे अद्वितीयं पराक्रमं प्रदर्शितवान्। अन्ते गदायुद्धे



जरासन्धः मूर्च्छां गतवान्। मूर्च्छावस्थायां स्थितं जरासन्धं तदीयः सारथिः रथे आरोप्य रणरङ्गात् दूरं नीतवान्। एतत् दृष्ट्वा सर्वे सैनिकाः पलायनसूत्रं पठितवन्तः। तान् अनुसृत्य गच्छन् सात्यकिः बहून् मारितवान्।

सात्यकिः विजयसूचकं शङ्खध्वनिं कृतवान्। एतेन कृष्णः ज्ञातवान् यत् जरासन्धः युद्धरङ्गात् निवृत्तः इति। अतः सः पाञ्चजन्यशङ्खस्य उद्घोषं कृतवान्।

कृष्णेन नीयमानां रुक्मिणीं प्रत्यानेतुं गताः जरासन्धादयः वीराः पराजयं प्राप्य प्रत्यागत्य शिरः अवनमय्य वसतिगृहतः निर्गतवन्तः। राजभवने स्थितः रुक्मिः एतां वार्तां सविस्तरं श्रुतवान्। सः एतत् अपमाननं सोढुम् अशक्नुवन् क्रोधेन— "युद्धे कृष्णं मारयित्वा

रुक्मिणीं यावत् न प्रत्यानेष्यामि तावत् नगरप्रवेशं न करिष्यामि'' इति पितुः बान्धवानां च पुरतः घोरां प्रतिज्ञां कृत्वा वीरैः योधैः, महत्या सेनया च सह युद्धार्थं निर्गतवान्। केचन दाक्षिणात्याः राजानः तम् अनुसृतवन्तः।

नर्मदानद्याः तीरे गच्छन्तं कृष्णस्य रथं दृष्टवान् रुक्मिः। सः अत्युत्साहेन स्वकीयं रथं वेगेन चालयन् कृष्णम् अतिक्रम्य गत्वा कृष्णस्य मार्गम् अवरुध्य तिष्ठन्– ''अये परस्त्रीचोर! कुत्र धावति भवान्? विदर्भराजस्य पुत्रः रुक्मिः अहम्। यदि इतोऽपि प्राणान् धारयितुम् इच्छति तर्हि रुक्मिणीं मह्यं प्रत्यर्पयतु। अन्यथा युद्धार्थं सिद्धः भवतु'' इति वीरावेशेन वदन् कृष्णम् उद्दिश्य बाणान् प्रयुक्तवान्।

कृष्णः अनायासेन रुक्मेः सारथिं मारितवान्। विद्युद्वेगेन बाणान् प्रयुज्य रुक्मेः शरीरं बाणावृतं कृतवान्। तेषां बाणानाम् अपनयनेन एव रुक्मिः श्रान्तः जातः।

रुक्मेः दुःस्थितिं दृष्ट्वा क्रुद्धाः दक्षिणदेशीयाः राजानः कृष्णं परितः आवृत्य युद्धम् आरब्धवन्तः। नर्मदातीरे घोरं युद्धं प्रवृत्तम्। अल्पे एव काले पुनश्चेतनं प्राप्य रुक्मिः अन्यं रथम् आरुह्य कृष्णस्य उपरि पुनरपि आक्रमणं कृतवान्।

कृष्णः रुक्मेः वक्षःस्थलम् उद्दिश्य त्रीन् बाणान् प्रयुज्य रुक्मिं मूर्च्छितं कृतवान्।

भूमौ पतितम् अग्रजं दृष्ट्वा कृष्णस्य रथे उपविष्टा रुक्मिणी सगद्गदं रोदनम् आरब्धवती।

कृष्णः रुक्मिणीम् उत्थाप्य सान्त्वनवचनानि उक्त्वा– 'रुक्मेः प्राणाः सुरक्षिताः सन्ति, चिन्तां मा करोतु' इति आश्वास्य सर्वान् शत्रुराजान् निर्लक्ष्य द्वारकाम् उद्दिश्य रथं प्रेरितवान्। तदीयः परिवारः अपि तम् अनुसृत्य अगच्छत्।

रुक्मेः पराजयस्य अनन्तरं कोऽपि कृष्णस्य उपरि आक्रमणसाहसं न कृतवान्।






# योग्या चिकित्सा

नारायणपुरे नागेशः नाम युवकः आसीत्। सः अनारोग्यपीडितया स्वमात्रा सह वैद्यस्य गृहं गतवान्। तत्र बहवः रोगिणः उपविष्टवन्तः आसन्। वैद्यदर्शनार्थम् इतोऽपि सुदीर्घकालं प्रतीक्षा करणीया भवति इति आलोचितवान् नागेशः मातरम् एकत्र उपवेश्य– "अहं विपणिं गत्वा आगच्छामि" इति उक्त्वा ततः निर्गतवान्।

नागेशः यद्यपि प्राप्तवयस्कः, तथापि सः परिश्रमेण कार्यं न करोति। बाल्ये एव सः पितृविहीनः जातः। माता तम् अतिलालनेन वर्धितवती। अतः सहजतया दुष्टसहवासः जातः। द्यूतम् अभ्यस्तम्। द्यूतार्थं धनं यदा न्यूनं जातं तदा चौर्यम् अपि अल्पप्रमाणेन आरब्धम्।

कालक्रमेण चौर्येण प्राप्यमाणं धनम् अपर्याप्तं जातम्। द्यूतार्थं धनस्य आवश्यकता तु दिने दिने वर्धते। अतः तेन पूर्वदिने एकं साहसकार्यं कृतम् आसीत्।

सः ग्रामात् बहिः तडागस्य समीपे उपविष्टः आसीत्। सायङ्कालसमये कश्चन पुरुषः तेन मार्गेण आगतवान्। नागेशः झटिति मार्गम् आगत्य तस्य गमनम् अवरुध्य कठिनस्वरेण गर्जितवान्– "भोः, विना विरोधं धनस्यूतं मह्यम् अर्पयतु। अन्यथा प्राणैः वियुक्तः भवेत् भवान्" इति।

सः पुरुषः भीत्या कम्पमानः धनस्यूतं तत्रैव क्षिप्त्वा प्राणरक्षणाशया ग्रामं प्रति धावितवान्। तस्मिन् स्यूते चतुस्सहस्रं रूप्यकाणि आसन्। तानि गणयतः नागेशस्य महान् सन्तोषः। ततः शतं रूप्यकाणि स्वीकृत्य स्वकोषे स्थापितवान् सः। अवशिष्टं समीपस्थस्य तिन्त्रिणीवृक्षस्य कोटरे संस्थाप्य गृहं प्रात्यागतवान्।

यदा सः गृहम् आगतः तदा तदीया माता ज्वरेण पीडिता शय्यां प्रसार्य सुप्तवती आसीत्। वञ्चनया प्राप्तं धनं तु कोषे आसीत् एव। अतः सः मातरम् उक्तवान्– "अम्ब! चिन्तां मा करोतु। उत्तमां चिकित्सां कारयिष्यामि" इति।

एतदनुगुणम् अद्य सः मातरं वैद्यसमीपम् आनीतवान् अस्ति। समययापनार्थं बहिः गतः सः यदा प्रत्यागतः तदा चिकित्सालयतः सर्वे रोगिणः निर्गताः आसन्।

तदीया माता तु हस्तौ पादौ च कम्पयन्ती नेत्रतारकाम् इतस्ततः बहुधा चालयन्ती चिकित्सालयस्य पुरतः शयिता आसीत्। वैद्यः तस्याः नाडीपरीक्षायां मग्नः दृश्यते स्म।

"मम मातः किं जातं वैद्यवर्य!?" इति सोद्वेगं पृच्छन् वेगेन आगतः नागेशः मातुः पार्श्वे उपविष्टवान्।

"भवान् एव वा एतस्याः पुत्रः? समये उपस्थितः भवान्। भवतः माता वातरोगेण ग्रस्ता अस्ति। तप्तायःशलाकया चर्मणि रेखा करणीया इदानीम्" इति उक्तवान् वैद्यः।

अत्रान्तरे वैद्यस्य साहाय्यकः अयःशलाकां सम्यक् उष्णीकृत्य आनीतवान्। नागेशः मातुः हस्तं दृढं गृहीतवान्। किन्तु माता तप्तायःशलाकादाहात् भीता हस्तं पृष्ठतः आकृष्टवती। एतावता वैद्यस्य हस्ते स्थितया तप्तायःशलाकया नागेशस्य हस्तः सम्यक् दग्धः। वेदनां सोढुम् अशक्तः सः उच्चैः आक्रन्दनं कृतवान्।

"अहो! कीदृशम् अकार्यं जातम्! भवतः



हस्तः दग्धः! एषः एव दाहः भवतः मातुः हस्ते यदि भवेत् तर्हि सा प्राणापायात् रक्षिता अभविष्यत्। इदानीं तु कालः अतीतः। सा गतप्राणा भविष्यति'' इति उक्तवान् वैद्यः।

एकत्र स्वस्य हस्तः दग्धः इति तापः, अपरत्र माता गतप्राणा जाता इति खेदः। एतेन नागेशः उन्मत्तः इव जातः।

सः झटिति उत्प्लुत्य वैद्यं कण्ठे गृहीत्वा– ''मम मातुः प्राणापहारकः भवान् न वैद्यः, अपि तु घातकः, क्रूरः, दुष्टः'' इति उच्चैः आक्रोशनं कृतवान्।

तदा वैद्यः तं बलात् निवार्य– ''भोः दुष्ट! भवान् केवलं चोरः इति मया एतावत्पर्यन्तं भावितम् आसीत्। इदानीं भवतः घातकत्वम् अपि प्रमाणितम् अभवत्। ह्यः भवता यत् धनं लुण्ठितं तत् केनचित् कन्यापित्रा भूमिं विक्रीय पुत्र्याः विवाहार्थम् आनीयमानम् आसीत्। 'इतः परं मम विवाहः न भविष्यति' इति आलोच्य सा कन्या आत्महत्यां कृतवती। येन हस्तेन भवता धनलुण्ठनं कृतं सः हस्तः तप्तायःशलाकया दग्धः जातः। भवतः मातुः प्राणनिर्गमनस्य कारणम् अपि तदेव – भवता कृतं लुण्ठनम्'' इति उक्तवान्।

'वैद्यः एतत्सर्वं कथं जानाति? प्रायः तस्य दिव्या दृष्टिः स्यात्?' इति आलोचयन् नागेशः दिग्भ्रान्तः। 'चौर्यं यत् कृतं तत् कस्यचित् कुटुम्बस्य विनाशाय जातम्' इति ज्ञात्वा नागेशः नितरां खिन्नः। सः पश्चात्तापेन दग्धः जातः।

सः वैद्यस्य पादौ गृहीत्वा– ''तस्य



कन्यापितुः शापः एव मम मातुः मरणे कारणम् अभवत्। मया परिश्रमेण यदि कार्यं कृतं स्यात् तर्हि सा अजीविष्यत्। इतः परं वा परिश्रमेण मया जीवनं कृतं चेदेव मातुः आत्मा तृप्तः भवेत्। अहम् आगच्छामि तावत्'' इति उक्त्वा ततः वेगेन गतवान्।

नागेशस्य गमनानन्तरं तदीया माता उत्थाय वैद्यम् उक्तवती– ''मम पुत्रस्य योग्या चिकित्सा कृता भवता। इतः परं सः परिश्रमेण जीवनं करिष्यति। भवता बहु उपकृतम्'' इति।

''अम्ब! देवो दयालुः। अतः मम उपायः फलितः। भवत्या अत्र महान् सहकारः दत्तः। तस्य दाहस्य भवत्याः ज्वरस्य च योग्यां चिकित्साम् अहं करोमि'' इति उक्तवान् वैद्यः।

एतावत्पर्यन्तं प्रकोष्ठे निलीय स्थितः वैद्यस्य बन्धुः कश्चित् बहिः आगत्य उक्तवान्– ''मात्रा सह आगच्छन्तं तं दृष्ट्वा 'एषः एव मम धनस्य अपहारकः' इति यत् अभिज्ञानं मया प्राप्तं तत् उपकाराय अभवत्। अस्माकम् उपायः फलितः। किन्तु मम कश्चन प्रश्नः – कन्यायाः कस्याश्चित् आत्महत्याप्रसङ्गः यत् कल्पितः तत् किमर्थम् इति'' इति।

''चौर्यस्य घोरः दुष्परिणामः तेन अवगतः भवेत् इति उद्देशेन मया सः प्रसङ्गः कल्पितः। ततः निरीक्षितः एव परिणामः प्राप्तः'' इति हसन् उक्तवान् वैद्यः।

वृक्षकोटरे स्थापितं धनं स्वीकृत्य अल्पेन एव कालेन प्रत्यागतः नागेशः वैद्यादीनां वचनं श्रुतवान् एव। सः तेषां पुरतः आगत्य– ''अपरिचितस्य अपि मम उद्धारार्थं भवद्भ्यां यः प्रयत्नः कृतः तदर्थम् अहं कृतज्ञः अस्मि। मया पुनर्जन्म प्राप्तम् इव। मम माता अपि सजीवा एव अस्ति। इतः परम् अहं परिश्रमेण एव जीवनं करिष्यामि'' इति उक्त्वा धनस्यूतं वैद्यबन्धवे दत्तवान्।

नागेशे यत् परिवर्तनं जातं तेन सन्तुष्टाः ते सर्वे तं सन्तोषेण आशिषा अनुगृहीतवन्तः।





# अदृष्टम्

कस्मिंश्चित् ग्रामे द्वौ वृद्धौ आस्ताम्। तयोः अन्यतरः परमसज्जनः। अपरः स्वभावेन कुटिलः। कदाचित् युगादिसन्दर्भे तौ परस्परं मिलितवन्तौ।

"मया विचित्रः स्वप्नः दृष्टः। मम अदृष्टम् आकाशात् पतितम् इव दृष्टं मया" इति उक्तवान् सज्जनः वृद्धः।

"अहो! एवं वा? आश्चर्यं नाम मया अपि कश्चन स्वप्नः दृष्टः। मम अदृष्टं भूमितः उद्गतम् इव मया दृष्टम्" इति उक्तवान् कुटिलः वृद्धः।

"यथा ललाटलिखितं तथा फलम्। यदि स्वप्नफलम् अस्माकं ललाटे लिखितं स्यात् तर्हि तत् अवश्यं प्राप्यते एव" इति उक्त्वा सज्जनः वृद्धः गृहं गतवान्।

कानिचन दिनानि अतीतानि। हेमन्तऋतुः अपि आगतः। सज्जनः वृद्धः कृषिकार्यम् आरब्धुम् इच्छन् उत्तमे दिने उत्तमे मुहूर्ते खनित्रकुद्दालादीन् स्वीकृत्य क्षेत्रं गतवान्। खननम् आरब्धवान् च।

खननसमये 'खणाल्' इति कश्चन शब्दः श्रुतः। आश्चर्यम् अनुभवन् सज्जनः वृद्धः खननम् अनुवर्तितवान्। तदा तेन किमपि पात्रं प्राप्तम्। सः पात्रस्य आवरणम् अपसारितवान्। पात्रस्य अन्तः सुवर्णनाणकानि आसन्। "एतत् धनं प्रायः मम मित्रस्य वृद्धस्य एव। 'मम अदृष्टफलं भूमितः उद्गतम् इव मया स्वप्ने दृष्टम्' इति तेन उक्तम् आसीत्। गत्वा तम् एतां वार्तां निवेदयामि" इति आलोच्य सः पात्रं यथापूर्वं स्थापितवान्।

अनन्तरम् एषः सज्जनः वृद्धः मित्रस्य वृद्धस्य गृहं गत्वा निवेदितवान्– "भोः मित्र! भवतः अदृष्टं मम क्षेत्रे प्रकटितम् अस्ति।

"जपानुदेशीया जानपदकथा"

सुवर्णनाणकमयं पात्रं प्राप्तं तत्र। तत् भवदीयम् एव। मम क्षेत्रं गत्वा तत् पात्रम् आनयतु'' इति।

मित्रगृहतः प्रत्यागतः सज्जनवृद्धः पत्नीं प्रवृत्तं सर्वं निवेद्य– ''तदीयम् अदृष्टं मम क्षेत्रे यत् प्रकटितम् अभवत् तेन सः नितरां सन्तुष्टः। एतावता सः नाणकपात्रं स्वगृहं नीतवान् स्यात्'' इति उक्तवान्।

''युक्तम् एव आचरितं भवता'' इति उक्तवती सज्जनवृद्धस्य पत्नी।

मित्रस्य वचनं श्रुत्वा सन्तोषेण क्षेत्रं गतवान् आसीत् कुटिलवृद्धः। यत्र धनपात्रम् अस्ति तत् स्थलं दूरतः एव स्फुटं दृश्यते स्म। एषः त्वरया गत्वा मृत्तिकाम् अपसार्य पात्रम् उन्नीय आवरणम् अपसारितवान्। किन्तु तेन पात्रे सुवर्णनाणकानि न दृष्टानि, अपि तु फूत्कुर्वन्तः सर्पाः दृष्टाः!

कुटिलवृद्धः एतत् दृष्ट्वा नितरां क्रुद्धः। ''अहो वञ्चना! कीदृशी धूर्तता! येन क्रमेण सः मां वञ्चितवान् तेनैव क्रमेण तम् अपि वञ्चयिष्यामि'' इति आलोच्य सः पात्रं यथापूर्वं पिधाय स्वगृहं नीतवान्।

रात्रिसमये तत् पात्रं स्वीकृत्य मित्रगृहं गतवान्। गृहस्य पृष्ठतः निश्रेण्याः आधारेण छदिम् आरुह्य मृच्छदम् अपसार्य अन्तः दृष्टिं प्रसारितवान्। तत्र सः सज्जनवृद्धः हसन्त्याः पार्श्वे सुखेन उपविश्य पत्न्या सह वार्तालापे मग्नः आसीत्। एतत् दृष्ट्वा असूयाम् अनुभूतवान् कुटिलवृद्धः।

सः क्रोधेन तप्यमानः पात्रस्य आवरणम् अपनीय पात्रम् अधोमुखं कृत्वा पात्रस्थान् सर्पान् अधः पातितवान्। पतनसमये ते सर्पाः पुनरपि नाणकरूपं प्राप्तवन्तः आसन्।

नाणकपतनं दृष्ट्वा सन्तोषम् अनुभवन् सज्जनवृद्धः पत्नीम् उक्तवान्– ''पश्यतु भोः, मम अपि स्वप्नः फलितः। यथा स्वप्ने दृष्टं तथैव मम अदृष्टफलम् आकाशात् पतितम्'' इति।

एतदनन्तरं सः दारिद्र्यपीडां विना पत्न्या सह सुखेन जीवन् सन्तोषेण जीवनं यापितवान्।





# पाचकस्य युक्तिः

भानुपुरे गोविन्दः नाम मध्यमस्तरीयः कृषकः आसीत्। सः ब्रह्मचर्येण जीवति। अतः सः पाकादिकार्यार्थं कञ्चन पाचकं नियुक्तवान् आसीत्। सः पाचकः पाककार्ये अतीव निपुणः आसीत्।

वसन्तकाले कदाचित् गोविन्दः कस्यापि कार्यस्य निमित्तम् अन्यं ग्रामं गत्वा प्रत्यागच्छन् आसीत्। तदा कश्चित् सुपरिचितः मार्गे मिलितः। "भोः, ममैव आम्रवाटिकायां फलितानि आम्रफलानि एतानि। इतः द्वयं स्वीकरोतु। एतज्जातीयस्य आम्रफलस्य रुचिः अमृतम् इव भवति। खादनेन भवान् एव स्वयं जानाति" इति उक्त्वा गोविन्दस्य हस्ते फलद्वयं स्थापयित्वा स्वमार्गम् अनुसृतवान् सः सुपरिचितः।

कृषकः तत् फलद्वयं पाचकस्य हस्ते स्थापयित्वा– "प्रक्षाल्य खण्डशः कर्तयतु। इदानीम् अहम् आगच्छामि" इति उक्त्वा कार्यार्थं बहिः गतवान्।

पाचकः आम्रफलं सम्यक् क्षालयित्वा त्वचं निष्कास्य छुरिकया कर्तयन् एकं फलखण्डं मुखे स्थापितवान्। रुचिः वर्णनातीता आसीत्। द्वित्राः खण्डाः न्यूनाः चेत् केनापि न ज्ञायते इति आलोच्य सः पुनः खण्डद्वयं खादितवान्। रुचिः अपूर्वा आसीत् खलु? अतः अज्ञाततया पुनः खण्डद्वयं मुखे पतितम्। एवं फलद्वयस्य कर्तनसमाप्तितः पूर्वम् अर्धात् अधिकाः खण्डाः समाप्ताः अभवन्। अवशिष्टं भागं पश्यतः पाचकस्य मनसि महती भीतिः उत्पन्ना।

'इदानीं किं करणीयम्' इति चिन्ता आरब्धा। 'अर्धादधिकः भागः यत् खादितः तत् न अक्षम्यः अपराधः' इति सः जानाति। 'इदानीम् असत्यकथनं विना न अन्या गतिः। अल्पस्य असत्यस्य कथनस्य अपेक्षया महतः असत्यस्य कथनम् एव लाभकरम्' इति



आलोचितवान् पाचकः।

अनन्तरं पाचकः आम्रफलं समग्रं खादित्वा त्वचं बीजं च कोऽपि यथा न पश्येत् तादृशे स्थले पातयित्वा प्रत्यागत्य छुरिका-स्थालिकादिकं सम्यक् प्रक्षालितवान्। यजमानस्य प्रतीक्षायाम् उपविष्टवान् च।

गोविन्दः कार्यं समाप्य प्रत्यागच्छन् आसीत्। मार्गे कश्चन संन्यासी सम्मुखम् आगतवान्। अमृतसमस्य आम्रफलस्य स्मरणं कुर्वन् गोविन्दः– 'आम्रफलदानेन एतं संन्यासिनं सत्कृत्य पुण्यं सम्पादयामि' इति आलोचितवान्।

अतः सः संन्यासिनः समीपं गत्वा भक्त्या नमस्कृत्य विनयेन प्रार्थितवान्– "स्वामिन्! कृपया मम गृहम् आगच्छतु। समीपे एव अस्ति मम गृहम्। अल्पम् आतिथ्यं स्वीकृत्य गन्तुम् अर्हति भवान्" इति।

संन्यासी गोविन्दस्य प्रार्थनाम् अङ्गीकृत्य तम् अनुसृतवान्। गोविन्दः संन्यासिनम् आसने उपवेश्य अन्तः गत्वा पाचकम् उक्तवान्– "आम्रफलं कर्तिततवान् खलु? सौभाग्यवशात् महात्मा गृहम् आगतः अस्ति। आम्रफलखण्डान् तस्य पुरतः स्थापयाव तावत्" इति।

"केन कर्तयेयम्? छुरिकायाः धारायाः तीक्ष्णता सर्वथा नष्टा" इति वदन् पाचकः छुरिकाम् आनीय प्रदर्शितवान्।

पाचकस्य वचनं सत्यं मन्यमानः गोविन्दः उक्तवान्– "पार्श्वे एव लोहकारस्य गृहम् अस्ति। तत्र तीक्ष्णीकारयितुं शक्यम् आसीत् खलु? अस्तु तावत्। इदानीम् अहम् एव तीक्ष्णीकृत्य ददामि" इति उक्त्वा गृहात् बहिः गतवान्। शिलायाः उपरि उपविश्य उद्घर्षणम् आरब्धवान् च।

अत्रान्तरे पाचकः संन्यासिनः समीपम् आगत्य मन्दस्वरेण पृष्टवान्– "कुत्र मिलितः भवान्? यजमानस्य स्वभावं न जानाति वा भवान्?" इति।

"अहं किं जानामि? इदम्प्रथमतया एतं ग्रामम् आगच्छन् अस्मि। किमर्थं भवान् तथा पृच्छति?" इति पृष्टवान् संन्यासी।

तदा पाचकः उक्तवान्– "एषः शक्तिपूजकः श्रीमन्! भवादृशान् सज्जनान्

मधुरवचनैः वशीकृत्य गृहम् आनयति। आगतानां कर्णौ कर्तयित्वा देव्यै नैवेद्यरूपेण अर्पयति च। इतःपूर्वं बहूनां सज्जनानां कर्णकर्तनं कृतवान् सः। तत्र शृणोतु, शब्दः श्रूयते खलु? सः बहिः छुरिकां तीक्ष्णीकुर्वन् अस्ति। भवादृशाः यथा वेदनां झटिति न जानीयुः तथा कर्णच्छेदनं कर्तुम् इच्छन् सः छुरिकां तथा तीक्ष्णीकुर्वन् अस्ति। इतःपरं भवान् कर्णहीनः भविष्यति'' इति।

एतत् वचनं श्रुत्वा भीतः संन्यासी ततः वेगेन गन्तुम् उद्युक्तः। तावता गृहस्य अन्तः आगतः गोविन्दः पाचकम् आहूय उक्तवान्– ''छुरिका सम्यक् तीक्ष्णीकृता, पश्यतु। आम्रफलं शीघ्रं कर्तयतु। हन्त! संन्यासिनः विलम्बः जातः इति भाति'' इति।

''आम्रफलं कुत्र? संन्यासी वा कुत्र? भवान् यदा इतः गतवान् तदा एव सः संन्यासी अन्तः आगत्य फलद्वयम् अपि स्वीकृत्य पलायितवान्। यावत् अहं परिवृत्य पश्यामि तावता सः गृहात् निर्गतवान् आसीत्। महान् वञ्चकः सः!'' इति उद्गारं प्रकटितवान् पाचकः।

''उभयम् अपि नीतवान् वा! मित्रेण प्रीत्या दत्तम् आसीत् तत्। संन्यासी इति गौरवेण तम् गृहम् आनीतवान्। किन्तु एतस्य व्यवहारस्तु वञ्चकस्य'' इति वदन् गोविन्दः दूरे गच्छन्तं संन्यासिनं दृष्टवान्। छुरिकां गृहीत्वा एव वेगेन संन्यासिनम् अनुसृतवान्।

''भोः महाशय! उभयं मास्तु, एकं वा दत्त्वा गच्छतु। भवन्तं किमपि न करोमि'' इति उच्चैः वदन् गोविन्दः धावनम् आरब्धवान्।

गोविन्दस्य वचनं श्रुत्वा संन्यासी परिवृत्य दृष्टवान्। छुरिकाहस्तं तं दृष्ट्वा सः भयेन धावनम् आरब्धवान्। वेगेन धावन् सः कुत्रापि अदृश्यः अभवत्।

गोविन्दः निराशया प्रत्यागतवान्। पाचकः– ''मम उपायः फलितः। देवो दयालुः'' इति मनसि एव उद्गारं प्रकटितवान्।





# प्रत्यक्षपाठः

कस्मिंश्चित् ग्रामे नटवरः नाम कश्चन वणिक् आसीत्। तस्य वाणिज्यम् अल्पप्रमाणकम्। सः प्रतिसप्ताहं नगरं गत्वा विपण्यां वस्तूनि क्रीणाति। तानि स्वग्रामम् आनीय विक्रीणीते। प्राप्तेन लाभेन जीवनं यापयति च।

एकदा साप्ताहिकवाणिज्यनिमित्तं नगरं गन्तुम् उद्युक्तस्य नटवरस्य प्रस्थाने एव विलम्बः जातः। अतः भाटकशकटानि सर्वाणि तावता निर्गतानि आसन्।

नटवरः किञ्चित्कालं चिन्तितवान्– 'नगरं गत्वा वस्तूनि न आनयामि चेत् आपणे विक्रयणं न प्रचलेत्। तेन हानिः अनुभोक्तव्या। साप्ताहिकवाणिज्यात् भिन्ने दिने गच्छामि चेत् मूल्यम् अधिकं दातव्यम्। अतः यत्किमपि वा भवतु, पादाभ्याम् एव गत्वा आगच्छामि' इति। धनस्यूतं कटौ दृढं बद्ध्वा नगरं प्रति प्रस्थितवान् सः। आरम्भे तस्य गमनं वेगेन प्रवृत्तम्। किन्तु अल्पे एव काले गतिः मन्दा जाता। पादे महती वेदना अनुभूता। अनिवार्यतया सः मार्गस्य पार्श्वे वृक्षस्य च्छायायाम् उपविष्टवान्।

अल्पे एव काले अपरिचितः कश्चन युवकः महान्तं बन्धं स्वीकृत्य तस्य समीपम् आगत्य पृष्टवान्– "कुत्र गच्छन् अस्ति भवान्?" इति।

तदा नटवरः तम् उक्तवान्– "साप्ताहिकवाणिज्ये वस्तूनि क्रेतुम् इच्छन् नगरं गच्छन् अस्मि। मार्गायासपरिहारार्थं च अत्र उपविष्टवान् अस्मि" इति।

एतावता सः अपरिचितः युवकः शिरसि स्थितं भारम् अधः अवतार्य नटवरस्य पार्श्वे उपविश्य नटवरम् उद्दिश्य उक्तवान्– "मम नाम गुरुमूर्तिः इति। भवान् इव अहम् अपि

वणिक् एव। भवान् वस्तूनि क्रेतुं नगरं गच्छन् अस्ति, अहं तु विक्रेतुं गच्छन् अस्मि। आवयोः मध्ये एतावान् एव भेदः" इति।

तदा नटवरः हसन् उक्तवान्– "भेदः परिगणनीयः चेत् अन्योऽपि अंशः अस्ति। अहं वृद्धः। भवान् तु नवोत्साही तरुणः। भारं कमपि अवहन् अपि अहं मैलुद्वयं यावत् गमनसमये एव श्रान्तः। भवान् तु महान्तं भारं वहन् अपि विनायासं गच्छन् अस्ति" इति।

तदा गुरुमूर्तिः शिरः चालयन् उक्तवान्– "भवदुक्तं सत्यम् एव। किन्तु मम प्रश्नः भवान् एतस्मिन् वयसि किमर्थम् एवं परिश्रमं वहति? लिपिकारम् अन्यं साहाय्यकं वा प्रेषयितुम् अर्हति खलु?" इति।

"एतस्मिन् काले साहाय्यकादिषु कथं विश्वासः कर्तुं शक्यते भोः? भवान् तरुणः, इदमिदानीं लोकं पश्यन् अस्ति। परिणीता पत्नी, औरसाः पुत्राः चापि वञ्चयन्ति अस्मिन् काले। का कथा अन्येषाम्!" इति उक्तवान् नटवरः।

"एवं तर्हि भवान् केवलम् आत्मनि विश्वसिति, अन्यस्मिन् कस्मिन्नपि न विश्वसिति?" इति पृष्टवान् गुरुमूर्तिः।

"सत्यम्। अन्यस्मिन् मम विश्वासः सर्वथा नास्ति। तथा विश्वासं कृत्वा कोऽपि उत्तमां स्थितिं न प्राप्तवान्" इति दृढस्वरेण उक्तवान् नटवरः।



"स्वव्यवहारे भवतः दृढता प्रशंसार्हा एव। वार्धके स्थितः भवान् एतावद्दूरं प्रयाणेन श्रान्तः स्यात्। भवतः पादमर्दनं किञ्चित् करोमि" इति उक्त्वा गुरुमूर्तिः नटवरस्य पादमर्दनार्थम् उद्युक्तः।

नटवरः झटिति पादौ पृष्ठतः आकृष्य– "मास्तु भोः! किञ्चित्कालम् एवम् एव उपविशामि चेत् पादवेदना स्वयं न्यूना भविष्यति" इति उक्तवान्।

"तथा मा वदतु। पादमर्दनार्थं किं धनं पृच्छामि वा अहम्? न खलु? ज्येष्ठवणिजः भवतः सेवा पुण्यप्रदा। मम तु एतादृशे कार्ये महती आसक्तिः" इति वदन् गुरुमूर्तिः नटवरेण निषिध्यमानः अपि पादमर्दनं कर्तुम्

आरब्धवान्।

पादमर्दनेन नटवरः तु आयासपरिहारसुखम् अनुभवति। सः नेत्रे निमील्य उपविष्टवान्। गुरुमूर्तिः मधुराणि वचनानि वदन् क्रमशः पादं, बाहुं, स्कन्धं च मर्दयन् समयं संसाध्य नटवरस्य कण्ठस्य नाडीविशेषं बलात् नोदयित्वा तं मूर्च्छां गमितवान्। अनन्तरं तस्य धनग्रन्थिं स्वीकृत्य स्ववस्तूनि शिरसि आरोप्य ततः निर्गतवान्।

किञ्चित्कालानन्तरं नटवरः सचेतनः जातः। यदा कटिप्रदेशः स्पर्शपूर्वकं परीक्षितः तदा तेन तत्र धनस्यूतः न प्राप्तः। नटवरस्य हृदयं क्षणकालं स्तब्धम् इव। सः झटिति उत्थाय उद्वेगवशात् वेगेन श्वासोच्छ्वासं कुर्वन् गुरुमूर्तिम् अन्विष्यन् ततः धावितवान्। ततः अनतिदूरे अन्यस्य वृक्षस्य अधः सुखेन उपविष्टं गुरुमूर्तिं दृष्टवान् सः। वायुवेगेन तस्य समीपं गत्वा– "अये दुष्ट! नयवञ्चक! मम धनस्यूतः कुत्र?" इति वदन् क्रोधेन तस्य कण्ठं दृढं गृहीतवान्।

"भोः, तिष्ठतु तावत्। भवतः धनस्यूतं स्वीकरोतु" इति वदन् गुरुमूर्तिः नटवराय तदीयं धनस्यूतं प्रत्यर्पितवान्।

पुनर्जीवनं प्राप्तवान् इव समाधानेन निःश्वसन् नटवरः स्यूतम् उद्घाट्य धनं गणितवान्। तत्र धनं पूर्वं यावत् आसीत् तावदेव आसीत्। सः आश्चर्येण ,ुरुमूर्तिं पृष्टवान्– "किम् एतत् सर्वम्?" इति।

गरुमूर्तिः मन्दहासपूर्वकम् उक्तवान्– "अन्यथा मा भावयतु। कश्चन पाठः प्रत्यक्षं पाठनीयः इति उद्देशेन अहं भवतः सेवाम् आरब्धवान्। लोके सर्वे वञ्चकाः, चोराः इति न भावनीयम्। तथा चिन्तनं विवेकिनां लक्षणं न। साहाय्यके बन्धुषु च अविश्वासं प्रकटयन् भवान् अपरिचिते मयि विश्वासितवान्। यदि अहं चोरः स्यां तर्हि भवदीयं धनं नष्टम् अभविष्यत्। पात्रापात्रं विविच्य विश्वासः करणीयः" इति।

लज्जामिश्रितेन स्नेहेन गुरुमूर्तिं पश्यन् तेन सह नगरं गतवान् नटवरः।



## विषमीने विशेषासक्ताः



मीनेषु अत्यन्तं विषमयः पफर् फिश्। किन्तु एतस्य रुचिः अद्वितीयः इत्यतः जपानदेशे एतस्य मीनस्य खादने सर्वेषाम् अपि विशेषरतिः। अतः महत्सु उपाहारमन्दिरेषु एतेषां मीनानां विषांशयुतं भागम् अपसार्य पाकं कुर्वन्ति। एतादृशपाकार्थं विशेषानुभविनः पाचकाः च नियुज्यन्ते। तथापि जपानदेशे आहारे कुत्रापि विषांशः यदि दृश्येत तर्हि तत्र कारणं पफर् फिश् एव!

## दिने ३०,००० अण्डानां प्रसूतिः!



श्वेतपिपीलिकानां राज्ञी दिने ३०,००० अण्डानि प्रसूते। एतदाधारेण गणयामः चेत् ज्ञायते यत् सा स्वजीवितावधौ पञ्चाशत्-सहस्रकोटिसन्तानानि उत्पादयितुम् अर्हति इति।




सहरामरुभूमौ स्थितेषु पुलिनराशिषु एकैकः अपि १,४१० द्वादशाङ्गुलोन्नतः, मैल्त्रयं दीर्घः च भवति।

# कन्दुकं कस्य अस्ति?

| | |
|---|---|
| मूर्तिः – वागीशss वागीशss। | Vageesh... Vageesh..... |
| वागीशः – कः? मूर्तिः वा? एषः आगतोSस्मि। | Who? Oh! Murthy? Coming. |
| मू – क्रिकेट्क्रीडितुम् आगच्छति वा? | You wish to join us at Cricket? |
| वा – के के आगच्छन्ति? | Who are all Coming? |
| मू – रवि-गिरि-प्रदीपप्रभृतयः सर्वे आगच्छन्ति। भवन्तं प्रष्टुम् अहम् अत्र आगतवान्। | Ravi, Giri, Pradeep and others. I have come to find out about you. |
| वा – किन्तु कन्दुकं कस्य अस्ति? | But where is the ball? |
| मू – किं, भवतः नास्ति वा? | Why! you don't have! |
| वा – ह्यः भवान् क्रीडार्थं न आगतः खलु? अतः न जानाति। ह्यः गुल्मानां मध्ये कुत्रापि मम कन्दुकं नष्टम्। | You were not there yesterday and so you don't know. I lost it yesterday in one of the bushes. |
| मू – अन्वेषणं न कृतं वा? | You did't search? |
| वा – महदन्वेषणं कृतम्। किन्तु न प्राप्तम् एव। | Searched for quite a white, but couldn't find. |
| मू – प्रदीपस्य कन्दुकं तु गतसप्ताहे एव छिन्नम् ...। | Pradeep's ball broke last week! |
| वा – नगरतः यावत् अन्यत् न आनयामः तावत् क्रिकेट्क्रीडा अशक्या एव। | So, till we are able to get a ball from the city we can't play cricket. |
| मू – सर्वे क्रीडाङ्गणं तु आगताः भवन्ति। आवाम् अपि गच्छाव। या काSपि अन्या क्रीडा भवतु नाम। | Anyway, all are coming to the play ground. Let us also go. Let us play some other game. |
| वा – अस्तु तर्हि। युतकं धृत्वा आगच्छामि। | OK. I will put my shirt on and come. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां मे-८९ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

### 'जनवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **आत्मरक्षणे समाश्रिता जागरूकता।**

द्वितीयचित्रम् - **चित्रदर्शने प्रदर्शिता समुत्सुकता।**

प्रेषिका - श्रीरामगिरि श्यामला, पराशरभारतीसंस्कृतप्राथमिकपाठशाला, कन्दुकूरु-५ (आ.प्र.)

---

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

---

**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| 1. *Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 2. *Periodicity of Publication* | MONTHLY<br>1st of each calendar month |
| 3. *Printer's Name* | B. V. REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 4. *Publisher's Name* | B. VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 5. *Editor's Name* | B. NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 6. *Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. B. VENKATRAMA REDDY<br>2. B. V. SANJAY REDDY<br>3. B. V. NARESH REDDY<br>4. B. PADMAVATHI<br>5. B. VASUNDHARA<br>6. B. V. SHARATH REDDY<br>7. B. N. RAJESH<br>8. B. L. ARCHANA (Minor)<br>9. B. L. ARADHANA (Minor)<br>(Minors admitted to the benefits of Partnership)<br><br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |

I, B. Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

*1st March 1989*

**B. VISWANATHA REDDI**
*Signature of the Publisher*